कविहृदयम्–

# अप्रियस्य पथ्यस्य वक्ता

**सुलभाः पुरुषाः राजन्**
**सततं प्रियवादिनः।**
**अप्रियस्य च पथ्यस्य**
**वक्ता श्रोता सुदुर्लभः॥**

महाभारतस्य एतस्य श्लोकस्य तात्पर्यम् एवम् अस्ति - "वचनं यथा अस्माकं प्रियं भवेत् तथा सदा कथयन्तः बहवः भवन्ति। तादृशाः परस्परं मनः खेदं न इच्छन्ति। पथ्यम् अपि अप्रियं गोपयन्तः ते तत्तत्कालीनं निर्वहणं केवलं चिन्तयन्ति। अप्रियस्य अपि पथ्यस्य वक्तारः दुर्लभाः। कश्चित् वदति चेदपि तादृशस्य श्रोता सुदुर्लभः। सः एव अप्रियस्यापि पथ्यस्य कथने उद्युक्तः भवति यः दूरदर्शी स्निग्धः च भवति। सः केवलं अप्रियस्यापि पथ्यस्य श्रवणं सहते यश्च विवेकी सहृदयश्चापि भवति।"

येषां समीपे धनं भवति तेषां प्रभावः अपि महान् भवति। अतः तादृशान् परितः प्रियवादिनां समूहः एव तिष्ठति। ततः यः लाभः प्राप्यते तत्रैव तेषां दृष्टिः। लाभप्राप्तिः स्थगिता चेत् तादृशाः तत्परिसरतः दूरं गच्छन्ति।

प्रियवादी सर्वदा उत्तमान् अंशान् केवलं पश्यति वदति च। हितवादी पथ्यवादी तु दोषमार्जनविषये गुणपरिष्कारविषये च विशेषचिन्तनं करोति। श्रोतुः तुष्टेः अपेक्षया परिष्कारः एव पथ्यवादिनः लक्ष्यम्।

लोके अधिकाः प्रियवादिनः एव। प्रियवादित्वेन सहैव पथ्यवादित्वं तु मातरि दृश्यते। प्रियवचनैः सा पुत्रं तोषयन्ती पथ्यवचनैः तं सन्मार्गे नयति अपि। अन्यः पथ्यवक्ता गुरुः। सः अप्रियं वदति कदाचित्। किन्तु तस्य हृदयं तु सदा शिष्यहितम् एव इच्छति। "सामृतैः पाणिभिः घ्नन्ति, गुरवो न विषोक्षितैः" इति हि प्रचीनानाम् उक्तिः।

जिज्ञासा–

# पूर्वपदविशेषाः (सङ्ग्रहेण)

आचार्यः-वत्स! पूर्वपदविशेषविषये अस्माभिः किञ्चित् चर्चितं खलु? तत् पुनः स्मर्तुं शक्नोति वा?

शिष्यः- तत्सर्वं सम्यक् स्मरामि आचार्य! ते च-

(१) **नकारलोपः**- समासे पूर्वपदस्य अन्ते स्थितस्य नकारस्य लोपः भवति। महिम्नः (महिमन्) + वर्णनम् = महिमवर्णनम्, गुणी (गुणिन्) + पुरुषः = गुणिपुरुषः इत्यादिनि उदाहरणानि।

(२) **महतः आत्वम्**- समासे सामानाधिकरण्यस्थले पूर्वपदस्थस्य महच्छब्दस्य आकारः भवति। महापुरुषः, महाजनः इत्यादिनि उदाहरणानि।

(३) **ऋकारस्य आकारः**- द्वन्द्वसमासे रक्तसम्बन्धे विद्यासबन्धे वा द्योत्यमाने ऋदन्ते च परे पूर्वपदस्य ऋकारस्य आकरः। मातापितरौ इति उदाहरणम्।

आ- मातापुत्रौ पितापुत्र्यौ इत्यादिषु?

शि- पुत्रशब्दे पुत्रीशब्दे च परे अपि आत्वं भवति। पूर्वोक्तानि निमित्तानि तु भवेयुः एव।

आ- अस्तु, अग्रे कथयतु।

शि- (४) **पुल्लिङ्गवत् रूपम्**- कर्मधारयसमासे (बहुव्रीहौ च) पूर्वपदत्वेन स्थितं प्रातिपदिकं स्त्रीलिङ्गरूपेण विद्यमानं सत् यदि भाषितपुंस्कं भवति तर्हि तस्य पुल्लिङ्गवत् रूपं भवति। दीर्घमाला, जीवद्भाषा इत्यादीनि उदाहरणानि।

आ- साधु वत्स, साधु! विषयः सम्यक् अवगतः भवता।

शि- श्रीमन्, महात्मागान्धेः इति रूपं न भवति खलु?

आ- गान्धिशब्दः अव्युत्पन्नः। अतः तस्य विभक्तियोजनं करणीयं वा न वा इति तु भिन्नः एव विषयः। तथापि गान्धेः इति षष्ठीविभक्त्यन्तं इति भावयामः चेत्

महात्मनः गान्धेः इति वा वक्तव्यम्। महात्मागान्धेः इति रूपं तु सर्वथा अशुद्धम्।

शि- महदानन्दः इति रूपम् अपि न भवति खलु?

आ- युक्तायुक्ततानिर्णये भवतः किमर्थं सन्देहः? नियमान् भवान् जानाति। अतः उदाहरणानां साधुत्वविवेचनं भवान् एव कर्तुं शक्नोति।

शि- तथापि व्याकरणसूत्राणां विशेषज्ञानं नास्तीति कारणतः ज्ञातस्य अपि निर्णये अस्पष्टता। महदानन्दः इत्यत्र समानविभक्तिकत्वम्। अतः महच्छब्दस्य आकारः भवति एव। महानन्दः इत्येव वक्तव्यं, न तु महदानन्दः इति।

आ- कार्यकर्तारः श्रोतरः च इत्यत्र द्वन्द्वे कृते।

शि- कार्यकर्तृश्रोतरः इत्येव। यतः अत्र विद्यासम्बन्धः रक्तसम्बन्धः वा न द्योत्यते।

आ- ननान्दा + पुत्री=....?

शि- ननान्दा नाम पत्युः भगिनी खलु? ऋकारान्तं वा तत् पदम्? ।

आ- अथ किम्? आकारान्तम् इति चिन्तितवान् वा भवान्?

शि- आम्, कस्य समासस्य अनुगुणं मया रूपं वक्तव्यम्?

आ- साधु वत्स! समासानुगुणं रूपं भिद्यते इति स्मरति खलु भवान्? द्वन्द्वे तत्पुरुषे चापि वदतु।

शि- द्वन्द्वे ननान्दापुत्र्यौ इति। पुत्रीशब्दस्य परत्वम् अस्तीत्यतः ऋकारस्य आत्वम्। तत्पुरुषे तु ननान्दृपुत्री इति।

आ- सुन्दरी चासौ भाषा इत्यत्र समस्तं रूपं किम्?

शि- सुन्दरी भाषा? उत सुन्दरा भाषा?

आ- स्त्री चेत् सुन्दरी, भाषादयः चेत् सुन्दराः इति वा भवतः अभिप्रायः? भाषा अपि सुन्दरी एव, न तु सुन्दरा। अस्तु तावत्, समस्त रूपं कथयतु।

शि- सुन्दरभाषा इति। यतः सुन्दरीशब्दः भाषितपुंस्कः। अतः पूर्वपदस्थस्य तस्य पुल्लिङ्गवद्रूपम्।

आ- पूर्वपदविशेषस्य उदाहरणानि प्रत्युदाहरणानि च भवान् सम्यक् ज्ञातवान्। प्रयोगसमये सर्वं स्मरति चेत् भवान् निर्दुष्टं व्यवहर्तुं शक्नोति।



# चन्दमामा

नवम्बर्-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

# चन्दमामा

संस्थापकः- 'चक्रपाणिः'        सञ्चालकः- 'नागिरेड्डी'

संस्कृतेन सम्भाषणेन किं सिध्यति? किं तेन व्याकरणं रक्ष्यते? किं पाण्डित्यं सिध्यति? किं शास्त्रस्य अवगतिः रक्षणं वा भविष्यति? एतादृशं किमपि सम्भाषणेन न सिध्यति। तर्हि सम्भाषणेन संस्कृतस्य किं वा प्रयोजनम्? किमर्थं बालैः, प्रौढैः, पण्डितैः,पामरैः चापि सम्भाषणं करणीयम् इति साग्रहम् उच्यते?

पूर्वोक्तं प्रयोजनं किमपि न सिध्यति इति तु सत्यम् एव। किन्तु एतेभ्यः सर्वेभ्यः भिन्नम् अन्यत् एव अपूर्वं सिध्यति। तच्च भाषया सह आत्मीयता। पण्डितः पामरः चापि सम्भाषणं कुर्वन् केवलं भाषाम् आत्मीयां मनुते। यथा मातृभाषया सह गाढः सम्बन्धः भवति तथैव संस्कृतेन सह गाढः सम्बन्धः सम्भाषणेनैव सिध्यति। अत्मियता यदा वर्धते तदा तन्निमित्तं सर्वस्वं त्यक्तुम् अपि कश्चित् सिद्धः भवेत्।

न अयं भोजस्य कालिदासस्य वा कालः, यत्र भाषायाः जनानां च मध्ये आत्मीयः सहजः सम्बन्धः स्यात्। इदानीं तु प्रयत्नशतेन अपि स च सम्बन्धः कल्पनीयः। तदर्थं सुलभः,सरलः,असदृशः च मार्गः सम्भाषणं नाम।

सम्पुटः- ४        नवंम्बर् - ८७        सञ्चिका- ७

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००



रसप्रश्नाः-

# चित्रकूटात् पञ्चवटीं प्रति

(चित्रकूटात् प्रस्थितः रामः पञ्चवट्यां कुटीरं निर्माय निवसति। एतन्मध्ये प्रवृत्तां कथाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। उत्तररूपेण विकल्पत्रयं सूचितम् अस्ति अपि। युक्तम् उत्तरं जानन्तु)

I श्रीरामः चित्रकूटात् किमर्थं प्रस्थितवान्?
१. स च प्रदेशः वसत्यर्थम् अनुकूलकरः न इति।
२. अनुजस्य मातॄणां च स्मरणं तत्र पदे पदे बाधते इति।
३. राक्षसानां पीडां सोढुं न शक्यते इति।

II सीतां पातिव्रत्यधर्मं बोधितवत्याः अनसूयायाः पत्युः नाम किम्?
१. अगस्त्यमुनिः। २. अत्रिमुनिः। ३. जमदग्निमुनिः।

III विराधः नाम कुरूपी राक्षसः कुत्र दृष्टः?
१. दण्डकारण्ये। २. जनस्थानप्रान्ते। ३. विन्ध्यपर्वतप्रान्ते।

IV विराधस्य पूर्वजन्मनः स्वरूपं किम् आसीत्?
१. सः प्रजाकण्टकः राजा आसीत्।
२. इन्द्रस्य आस्थाने स्थितः यक्षः आसीत्।
३. कुबेरस्य आस्थाने स्थितः गन्धर्वः आसीत्।

V विराधस्य शापविमोचनं कथं जातम्?
१. श्रीरामस्य दर्शनमात्रेण।
२. श्रीरामः शिरच्छेदं यदा कृतवान् तदा।
३. श्रीरामः गर्ते यदा निखानितवान् तदा।

VI अप्सरोभिः वशीकृतः तपस्वी माण्डकर्णिः कुत्र निवसति स्म?
१. पम्पासरोवरे। २. पञ्चाप्सरःसरोवरे। ३. चम्पासरोवरे।

उत्तराणि–

I-२. II-२. III-१. IV-३. V-३. VI-२.

## रसवार्ता:



### मार्जारस्य साहसयात्रा!

मिकी नामकः मार्जारः अपूर्वां साहसयात्राम् एव अकरोत्। जपनादेशीयः जुनिचीसूगा• नामकः आरक्षकाधिकारी स्वेन पालितं मार्जारं स्वगृहात् ३७० कि. मी. दूरे अजागरूकतया त्यक्त्वा प्रत्यागतवान्। सः मार्जारः नवदश मासान् यावत् एकाकी एव प्रयाणं कुर्वन् स्वयजमानस्य गृहं प्राप्नोत्।

### स्वप्नस्य साकारता



पश्चिमजर्मन् देशीयः नवविंशतिवर्षीयः आण्ड्रीस् नामकः युवकः 'भारतादिदेशेषु सञ्चारः करणीयः' इति स्वप्नं पश्यति स्म। किन्तु कस्मिंश्चित् अपघाते तस्य पादद्वयम् अपि भग्नम्। तथापि सः स्वकीयाम् आशां न परित्यक्तवान्। चक्रसहिते आसन्दे उपविश्य सः भारतादिदेशेषु ५०,००० कि. मी. दूरं यावत् प्रयाणं कृतवान् एव!



### अयसः कर्तनार्थम् अपूर्वं साधनम्!

किं तत् क्रकचः? वज्रं वा? खड्गविशेषः वा? न। तत् तु सामान्यं जलम्! सत्यम् एतत्। केशाकारिकां जलधारां त्रिगुणीकृतेन ध्वनिवेगेन प्रेरयामः चेत् अयःप्रभृतयः धातवः आयुधैः इव (ततोऽपि उत्तमतया वा) कर्तिताः भवन्ति।

### भस्मीकरोति बालकः



उक्रेनियाप्रदेशे जातः त्रयोदशवर्षीयः बालः यत् स्पृशति तत् भस्मीभवति। तस्य करस्पर्शेन वस्त्राणि, पुस्तकानि, कपाटिकाः इत्यादीनि बहूनि भस्मीभूतानि अभवन्। एतेन विचित्र–परिणामेन चकिताः सोवियत् विज्ञानिनः वैद्याः च तं बालं चिकित्सालयं नीत्वा परिशीलयन्तः सन्ति।

पुराणगाथावली-

# निशाकरः

दण्डकारण्यसमीपे मुनिवाटिकायां निवसन्त्याः धर्मिष्ठायाः पुत्रः निशाकरः। मन्दमतिः सः दुष्टचेष्टासु अग्रगण्यः आसीत्।

एकदा निशाकरः अकस्मात् अदृश्यतां गतः। माता धर्मिष्ठा तं सर्वत्र अन्विष्टवती। किन्तु कुत्रापि सः न दृष्टः। 'केनचित् क्रूरपशुना सः खादितः स्यात्' इति प्रतिवेशिनः उक्तवन्तः। धर्मिष्ठा कथञ्चित् आत्मानं समाश्वासयन्ती दिनानि यापयन्ती आसीत्।

केषाञ्चित् वर्षाणाम् अनन्तरं धर्मिष्ठा कुत्रापि गच्छन्ती आसीत्। तदा सा समीपस्थात् कूपतः आगच्छन्तं क्षीणं मानवस्वरं श्रुतवती। सा कूपसमीपं गतवती। कूपः महाशिलया पिहितः आसीत्। 'केन किमर्थं वा कूपः शिलया एवं पिहितः?' इति आत्मनि एव पृच्छन्ती सा कूपे दृष्टिं प्रसारितवती।

कूपे स्थितः निशाकरः ''अम्बऽऽ'' इति मातरम् आहूतवान्। पुत्रस्य स्वरस्य परिचयं प्राप्य धर्मिष्ठा समीपस्थान् जनान् आहूय तेषां साहाय्येन कूपस्थां शिलाम् अपसारितवती। पुत्रम् उपरि आनायितवती च।

निशाकरस्य दुष्टचेष्टया खिन्नाः केचन तं कूपे पातयित्वा कूपं शिलया आच्छाद्य निर्गतवन्तः आसन्। कूपे पतितः निशाकरः जलस्य उपरिभागे स्थितानां तरुलतादीनां फलानि खादन् प्राणधारणं कृतवान्। तत्समये एव सः आत्मनः एतस्याः दुर्गतेः कारणं सगम्भीरं चिन्तयन् 'एतत्सर्वं पूर्वजन्मनः कर्मणः फलम्' इति एतां वस्तुस्थितिं ज्ञातवान्। निर्मलमनस्कः सन् उपरि आगतवान्। अनन्तरकाले कठिनेन तपसा सिद्धिं प्राप्य 'महामुनिः' इति कीर्तिं सम्पादितवान् च।





# तायकमाहात्म्यम्

पूर्वकाले गणराजः नाम कश्चन महाचोरः आसीत्। सः कदाचित् राजभवनं प्रविश्य कोषागारतः यथेष्टम् ऐश्वर्यं चोरितावान्। तत् एकत्र रहस्यस्थाने स्थापितवान् च। अनन्तरं तस्य मनसि कुतूहलं जातं यत् चोरग्रहणविषये कीदृशाः प्रयत्नाः राज्ये प्रचलन्तः सन्ति इति द्रष्टव्यम् इति। अतः गणराजः वेषान्तरं धृत्वा राजधानीम् आगतवान्।

यदा सः धर्मशालायाः पुरतः गच्छन् आसीत् तदा तेन कश्चन संन्यासी दृष्टः। सः संन्यासी सुप्रसिद्धः। 'तस्य समीपे यानि वस्तूनि भवन्ति तानि महिमान्वितानि' इति गणराजेन श्रुतम् आसीत्।

अतः सः निश्शब्दं संन्यासिनः समीपं गतवान्। किमपि वस्तु स्यात् वा इति अन्विष्टवान्। संन्यासिनः हस्ते रजतमयं तायकं बद्धम् आसीत्। चोरः गणराजः तत् तायकं संन्यासिनः हस्ततः निष्कास्य स्वहस्ते बद्धवान्। तदा जागरितः संन्यासी एतत् यद्यपि दृष्टवान्, तथापि सः किमपि न उक्तवान्।

तायकधारणसमनन्तरम् एव चोरस्य मुखात् एतानि वचनानि निर्गतानि - "अहम् एव महाचोरः गणराजः। महाराजस्य कोषागारः मया एव लुण्ठितः" इति।

अप्रयत्नेन स्वमुखात् उच्चैःस्वरेण आगतानि एतानि वचनानि श्रुत्वा चोरः भीतः। सः कोपेन तायकं वेगेन सुदूरं क्षिप्तवान्। किञ्चिद्दूरं गतं तायकं तावता एव वेगेन प्रत्यागत्य गणराजस्य हस्ते लग्नम् अभवत्। भीतः सः द्वित्रवारं तायकं दूरे क्षिप्तवान्। तथापि तत् प्रत्यागत्य तस्य हस्ते लगति स्म।

अत्रान्तरे जनाः तत्र सम्मिलिताः। राजभटाः अपि केचन तत्र आगतवन्तः। राजभटाः तं महाराजसमीपं नीतवन्तः।

"अनामिका"



विशेषकारणेन एषः सत्यं वदन् स्यात् इति। यावत् वस्तुस्थितिः न ज्ञायते तावत् एतं कारागारे स्थापयन्तु। जागरूकतया रक्षन्तु च'' इति।

तद्दिने रात्रिसमये गणराजः कारागृहरक्षकेण सह वार्तालापं कुर्वन् मैत्रीं सम्पाद्य स्वहस्ते बद्धं तायकं प्रदर्शयन् उक्तवान् - ''एतस्य माहात्म्यम् अपूर्वम्। एतस्य धारणेन भवान् एव स्वयम् जानाति'' इति।

भटः कुतूहलेन तायकं स्वीकृतवान्। तदा तस्य मुखतः एतानि वचनानि आगतानि - ''अहं रक्षणकार्यसमये निद्रां करोमि। किन्तु मम निद्रां कोऽपि न जानाति, यतः अहं नेत्रे उद्घाट्य एव निद्रां कर्तुं शक्नोमि'' इति।

एतेन रक्षकभटस्य रहस्यं ज्ञातवान् गणराजः। अतः सः मध्यरात्रसमये अयः - शलाकाः भञ्जयित्वा ततः पलायितवान्।

प्रातःकाले भटः प्रवृत्तं सर्वं ज्ञातवान्। सः भटः स्वयं महाराजसमीपं गत्वा उक्तवान् - ''महाप्रभो! गणराजः रात्रौ पलायितवान्। तत्र कारणं मम दोषः एव'' इति।

''राजा कोपेन भटं पृष्टवान् - ''भवान् किमर्थं तस्य पलायनार्थम् अवकाशं दत्तवान्?'' इति।

''प्रभो! तेन मह्यम् एकं तायकं दत्तम्। तस्य धारणेन मम मुखात् मदीयं रहस्यम् अप्रयत्नेन प्रकटितम् अभवत्'' इति वदन् सः भटः स्वहस्ते स्थितं तायकं महाराजाय दत्तवान्।

राजा चोरं दृष्ट्वा भटानां कथनम् अपि श्रुतवान्। अनन्तरं सः उक्तवान् - ''कोऽपि चोरः आत्मनः चौर्यं स्वयं व उद्घोषयति। तथापि एतेन सूचिते स्थले अन्वेषणं कृत्वा आगच्छन्तु। एतेन यदि असत्यम् उक्तं स्यात् तर्हि एतस्य शिरः कर्तयित्वा दुर्गद्वारे उत्तोलयन्तु'' इति।

भटाः गणराजेन सह तत् स्थलं गतवन्तः। तत्र वस्तुतः अपि चोरितानि आभरणादीनि आसन्। भटाः तानि आनीय महाराजाय प्रदर्शितवन्तः।

आश्चर्यचकितः राजा उक्तवान् - '' एतैः आभरणैः ज्ञायते यत् एषः महाचोरः गणराजः एव इति। किन्तु अहं चिन्तयामि - केनापि



राजा तायकं दूरे क्षिप्तवान्। किन्तु तत् प्रत्यागत्य महाराजस्य हस्ते एव पुनः लग्नम्। 'अन्येन यदि न स्वीक्रियते तर्हि एतत् न त्यजति' इति एतां वस्तुस्थितिं ज्ञातवान् महाराजः। मुष्ट्या गृहीत्वा एव सः तद्दिनं यापितवान्। तदा तस्य मनसि कश्चन विचारः अगतः - 'एतदाधारेण राजोद्योगिनां प्रजानां च अभिप्रायः ज्ञातव्यः' इति।

अनन्तरदिने सः सभाम् आयोज्य तत्र उपस्थितम् एकम् आहूय तस्य हस्ते तायकं बद्धवान्। तदा सः उच्चैःस्वरेण उक्तवान् - "प्रजानाम् उपरि अधिकं करभारम् आरोपयन् यावत् राज्यभारं करोति तावत् भवान् लुण्ठाकः, महाराजः कथमपि न भवति" इति।

अनन्तरं राजा तायकं ततः स्वीकृत्य एकस्य भटस्य हस्ते बद्धवान्। तदा भटः - "नाममात्रेण वेतनं यच्छन् यथेष्टं कार्यं च कारयन् एषः महाराजः सर्वथा निन्द्यः एव" इति असमाधानेन उक्तवान्।

तदनन्तरं राजा तत् तायकं सेनापतेः हस्ते बद्ध वान्। तदा सेनापतिः - "राजजीवनं नाम भोगस्य शय्या। अतः राजसिंहासनम् आरोढव्यम् इति मम महती इच्छा। न जाने, कदा एषा इच्छा पूरिता भवेत्" इति उक्तवान्।

एतादृशानि वचनानि श्रुतवतः महाराजस्य मनः - शान्तिः दूरङ्गता। रात्रौ निद्रा एव नास्ति। "प्रजानां हितार्थं मया बहूनि उत्तमकार्याणि कृतानि। तानि कोऽपि न स्मरति। वेतनवृद्धिः कृता चेदपि सैनिकानाम् मनःसमाधानम् एव नास्ति। महत्त्वपूर्णस्थाने तिष्ठतः सेनापतेः तु मद्विषये असूया। एतेषु विश्वस्य एव खलु, एतावत्पर्यन्तम् अहं राज्यभारं कृतवान्। कीदृशः विश्वासद्रोह!" इति एवं रूपेण चिन्तयन् महाराजः अतीव खिन्नः।

अनन्तरदिने सः मन्त्रिणं स्वसमीपम् आहूय उक्तवान् - "प्रवृत्ताः सर्वाः घटनाः परिशीलितवतः मम मनसि भावना यत् एषः राज्यपालनभारः मह्यं मास्तु इति" इति।

तदा मन्त्री हसन् उक्तवान् - "द्वित्राणाम् अभिप्रायं श्रुत्वा एवं निर्णयः अनुचितः एव। तीरे स्थित्वा सरोवरस्य गभीरतां ज्ञातुं न शक्नुमः

खलु वयम्? भवतः मनसः अशान्तेः कारणं तत् तायकम् एव। प्रथमं तत् अन्यस्मै ददातु। तदा भवान् स्वस्थचित्तः भविष्यति'' इति।

मन्त्रिणः एतां सूचनां राजा अङ्गीकृतवान्। तत् तायकं स्वीकरणीयम् इति सर्वान् प्रार्थितवान् अपि। किन्तु तायकं स्वीकर्तुं कोऽपि सिद्धः न जातः, यतः सर्वे तायकस्य माहात्म्यं जानन्ति स्म।

अन्ते राजा उद्घोषितवान् यत् यः तायकं धरति तस्मै अमूल्यं पारितोषिकं दीयते इति। एतदनन्तरम् अपि कोऽपि तायकं स्वीकर्तुं सिद्धः जातः। इदानीं महाराजस्य अहोरात्रम् एका एव चिन्ता - 'तायकं कथं निवारणीयम्?' इति।

चिन्तया श्रान्तः सः मन्त्रिणम् उक्तवान् - ''एतस्य तायकस्य निवारणोपायं भवान् एव सूचयतु'' इति।

मन्त्री दिनत्रयस्य समयं स्वीकृत्य ततः निर्गतवान्। तृतीये दिने प्रत्यागत्य आत्मना सह आगतम् एकं पुरुषं प्रदर्श्य उक्तवान् - ''महाप्रभो! एषः तायकधारणार्थं सिद्धः अस्ति'' इति।

राजा तायकं तस्य हस्ते बद्धवान्। 'सः किं वदेत्?' इति महाराजस्य कुतूहलम्। किन्तु सः तायकधारणानन्तरम् अपि किमपि न उक्तवान् एव। राजा पूर्वतनघोषणानुसारं तस्मै पारितोषिकं यच्छन् उक्तवान् - '' तायकधारणेन भवतः स्वरूपपरिचयः भवेत् इति मम निरीक्षा आसीत्। किन्तु भवान् कोऽपि महानुभावः इति भाति। अतः तायकस्य कोऽपि परिणामः न जातः'' इति।

तदा मन्त्री मन्दहासं प्रकटयन् उक्तवान् - ''प्रभो! एषः महानुभावः न अपि तु मूकः। 'तायकधारणार्थम् एषः योग्यः' इति निश्चित्य एतम् अनीतवान्'' इति

महाराजेन दत्तेन पारितोषकेण तस्य मूकस्य जीवनं समृद्धं जातम्। तायकप्रकरणस्य मूलकारणीभूतः महाचोरः गणराजः अनन्तरकाले केनापि देशे कुत्रापि न दृष्टः।





# काव्यपरीक्षा

विद्याभूषणः नाम युवकः विद्याभ्यासं समाप्य गुरुकुलतः स्वगृहं प्रत्यागतवान्। विद्यानुगुणम् उद्योगं प्राप्तुं सः न शक्नोति स्म। यतः तस्य मातापितरौ वृद्धौ। कृषि–कार्यम् एतेन एव परिशीलनीयम् आसीत्। विद्याभूषणः एतदपि दैवानुग्रहम् इति भावयन् श्रद्धया कृषिकार्ये लग्नः जातः।

विद्याभूषणः स्वभावतः भावजीवी। कवितायां तस्य विशेषासक्तिः। श्रमेण सम्पादितं पाण्डित्यम् अपि अस्ति एव। अतः सः कृषिकार्यं कुर्वन् एव प्राप्ते समये काव्यं रचयति। एवं क्रमेण तेन बहवः श्लोकाः रचिताः। खण्डकाव्य - महाकाव्यादीनि अपि द्वादश रचितानि।

विद्याभूषणस्य व्यवहारं तदीयः पिता सदा परिशीलयति। अविरतं कृषिकार्यं कुर्वता अपि पुत्रेण काव्यरचनं यत् कृतं तेन सः अतीव सन्तुष्टः । द्वादशकाव्यानां रचनं तु न सामान्यः विषयः। अतः पिता वचनैः स्वकीयं सन्तोषं प्रकटितवान् अपि।

पिता सहानुभूतिं प्रदर्शयन् विद्याभूषणम् उक्तवान् -''पुत्र! राजमान्यता प्राप्ता चेत् काव्यस्य कवेः च विशिष्टं गौरवम्। अतः भवान् भवता रचितेषु उत्तमम् एकं काव्यं स्वीकृत्य राजधानीं गच्छतु। अस्माकं दृष्ट्या सर्वाणि अपि उत्तमानि इति भासेत। अतः उत्तमं किम् इति निर्णेतुम् अन्यस्य साहाय्यं स्वीकरोतु'' इति।

''मया लिखितानां तारतम्यभावं निर्णेतुम् अहं न शक्नोमि इति तु सत्यम् एव। किन्तु अत्र साहाय्यं दातुं समर्थः कः अन्यः अस्ति?'' इति पितरं पृष्टवान् विद्याभूषणः।

''अस्माकं ग्रामाधिकारी एव अस्ति खलु?'' इति सूचितवान् पिता।

तस्मिन् ग्रामे काव्ये किञ्चिदिव आसक्तः नाम ग्रामाधिकारी एव इति तु सत्यम् एव।



किन्तु सः चाटुश्लोकादीनां चित्रकाव्यादीनां वा रसम् आस्वादयेत् । ध्वनिकाव्यस्य आस्वादने उत्तमतानिर्णये वा सः सर्वथा असमर्थः। एतां वस्तुस्थितिं विद्याभूषणः अपि जानाति।

अतः सः पितरम् उक्तवान् -"ये उत्तमकाव्यस्य लक्षणम् एव न जानन्ति, ये च रसास्वादनम् इतः पूर्वं कदापि न कृतवन्तः तादृशाः काव्यस्य उत्तमाधमत्वं निर्णेतुं कथं वा शक्नुयुः? सहृदयता काचित् अपेक्षिता खलु? चाटुश्लोकपण्डिताः ध्वनिकाव्यं कथं वा जानन्ति?" इति।

विद्याभूषणस्य पितुः काव्यक्षेत्रे कोऽपि परिश्रमः नास्ति । तथापि लोकानुभवः पर्याप्तम् अस्ति एव।

सः पुत्रम् उक्तवान् -"पुत्र! युक्त्या किं वा असाध्यम्? बुद्धिमन्तः लवणमयात् समुद्रजलतः अपि रुचिकरं पाकं कर्तुं शक्नुवन्ति। साधनानि न सन्ति इति खेदापेक्षया विद्यमानैः साधनैः एव कार्यस्य साधनं वरम् । ग्रामाधिकारिणः साहाय्यं स्वीकृत्य उत्तम–काव्यस्य निर्णयः कर्तुं निश्चयेन शक्येत इति भाति मम" इति।

पितुः मार्गदर्शनानुसारं विद्याभूषणः ग्रामाधिकारिणः समीपं गतवान्। काव्यानि श्रावयितुम् आरब्धवान् च।

प्रथमकाव्यस्य श्रवणेन एव सन्तुष्टः ग्रामाधिकारी उक्तवान् -"एतत् काव्यम् अपूर्वम्। महाराजस्य तोषणार्थम् एतत् एकम् एव पर्याप्तम्" इति।

तदा विद्याभूषणः -"श्रीमन्! एतत् उत्तमं स्यात् नाम। अत्र अविद्यमानाः उत्तमगुणाः कदाचित् इतरेषु भवितुम् अर्हन्ति खलु? अतः मदीयानि सर्वाणि काव्यानि श्रुत्वा अन्ते भवतः अभिप्रायं श्रावयतु" इति उक्त्वा इतराणि काव्यानि अपि श्रावितवान्।

ग्रामाधिकारी आसक्त्या श्रद्धया च सर्वाणि काव्यानि श्रुतवान्।

अन्ते प्रथमम् अभिप्रायम् एव दृढीकुर्वन् सः उक्तवान् "सर्वेषाम् अपेक्षया प्रथमकाव्यम् एव श्रेष्ठम्। एतेषु एकं तु अतीव जटिलं नीरसं च" इति

ग्रामाधिकारिणः प्रतिक्रियां श्रुत्वा विद्या–

भूषणः मौनं स्वगृहम् आगतवान्। अनन्तरं स्वरचितानि काव्यानि स्वीकृत्य राजधानीं गतवान्। अदृष्टवशात् विनायासं राज–दर्शनम् अपि प्राप्तवान् सः।

विद्यभूषणस्य काव्यं पञ्च दिनानि यावत् श्रुतवान् राजा। काव्यविषये अतीव सन्तुष्टः सः -"भवति महाकविलक्षणानि स्फुटं दृश्यन्ते। भवता अन्यत् किमपि काव्यं लिखितं वा?" इति पृष्टवान्।

"प्रभो! अन्यानि काव्यानि न लिखितानि इति न। अभ्यासार्थं मया बहूनि काव्यानि लिखितानि। उत्तमं काव्यं भवतः पुरतः पठनीयम् इति मम इच्छा आसीत्। काकोऽपि स्वशिशुं सुन्दरम् एव मनुते खलु? मया लिखितानि सर्वाणि उत्तमानि एव इति मम बुद्धिः वदति इति कृत्वा अहं ग्रामाधिकारिणः साहाय्यं स्वीकृतवान्। उत्तमं काव्यं निश्चित्य भवतः पुरतः पठितवान् अपि" इति उक्तवान् विद्याभूषणः।

"एवं वा? भवतः ग्रामाधिकारी तावान् चतुरः वा, यत् सः काव्यस्य उत्तमत्वं निर्णेतुं साहाय्यं कर्तुं समर्थः? तस्य सम्माननम् अवश्यं करणीयम्" इति वदन् राजा भटद्वारा तं ग्रामाधिकारिणं राजधानीं प्रति आनायितवान्।

राजधानीम् आगतवन्तं ग्रामाधिकारिणां विशेषरूपेण सम्मान्य राजा विद्याभूषणस्य अभिप्रायं श्रावितवान्।

तदा ग्रामाधिकारी असमाधानेन उक्तवान् -"प्रभो! विद्याभूषणः भवतः पुरतः यत्



काव्यं पठितवान् तत् मह्यं सर्वथा न अरोचत। मह्यं यत् काव्यम् अरोचत तदेव सः भवतः पुरतः यदि पठितवान् स्यात् तर्हि एतेन सम्मानेन अहम् अतीव सन्तुष्टः अभविष्यम्। किं करोमि, सः अप्रबुद्धः" इति।

विद्याभूषणस्य ग्रामाधिकारिणः च वचने सङ्गतिः न दृष्टा महाराजेन। सः प्रतिक्रियां कामपि अप्रदर्श्य ग्रामाधिकारिणम् अतिथि-गृहं प्रेषितवान्।

विद्याभूषणम् आहूय पृष्टवान् च -"किं भोः? ग्रामाधिकारिणे यत् अरोचत तत् काव्यम् अन्यत् एव। भवान् तु अन्यत् एव काव्यं मह्यं प्रदर्शितवान्! किम् एतत्?" इति।

तदा विद्याभूषणः हसन् उक्तवान् -"प्रभो! उत्तमकाव्यस्य चयने मया ग्रामाधिकारिणः साहाय्यं स्वीकृतम् इति एतावदेव उक्तम् ग्रामाधिकारिणे यत् अरोचत तत् काव्यं प्रदर्शितम् इति तु मया न उक्तं खलु? काव्यक्षेत्रे ग्रामाधिकारिणः योग्यता का इति अहं सम्यक् जानामि। अर्थगाम्भीर्ययुक्तं रसपरिपुष्टं चमत्कृतिजनकं काव्यं तस्मै न रोचते। श्लेषाद्यलङ्कारं ज्ञातुम् आवश्यकं भाषापाण्डित्यम् अपि तस्य नास्ति। यदि तस्मै सर्वाणि काव्यानि अरोचेरन् तर्हि अहम् अत्र भवतः समीपं निश्चयेन न आगमिष्यम्" इति।

उत्तमकाव्यचयने विद्याभूषणः ग्रामाधि-कारिणः साहाय्यं कथं स्वीकृतवान् इति ज्ञातवान् महाराजः।

सः सन्तोषेण विद्याभूषणम् उक्तवान् -"भवान् न केवलं प्रतिभावान्, अपि तु व्यवहारचतुरः अपि। भवादृशैः मम आस्थानस्य गौरवं प्रतिष्ठा च वर्धते" इति।

अनन्तरं विद्याभूषणम् आस्थानकवित्वेन नियोज्य तस्य वसत्यर्थं विशेषव्यवस्थां कृतवान् राजा।

अतः विद्याभूषणः ग्रामस्य कृषिकार्यस्य दायित्वम् अन्यस्मिन् आरोप्य मातापितृभ्यां सह राजधान्यां सुखेन निवसन् बहूनि उत्तमकाव्यानि रचयन् उत्तमां कीर्तिं सम्पादितवान्।





# ज्वालाद्वीपः

## (१७)

(भल्लूकचर्मधारिणः उग्रदत्तं स्वनायकस्य कन्धस्य समीपं नीतवन्तः। 'व्याघ्रचर्मधारिणां नायकस्य एकपादस्य नाशनार्थं राक्षसानां साहाय्यम् आवश्यकम्' इति कन्धः उग्रदत्तं प्रार्थितवान्। कन्धेन एतदपि उक्तं यत् एकपादस्य रक्तं ये पश्यन्ति, येषां रक्तं सः पश्यति ते तत्क्षणे एव मृताः भवन्ति इति। तदनन्तरम्..........)

**व्या**घ्रचर्मधारिणां नायकस्य एकपादस्य एतत् अपूर्वं सामर्थ्यं श्रुत्वा उग्रदत्तः रोमाञ्चितः अभवत्। तथापि तस्य मनसि दृढः निश्चयः यत् एकपादस्य संहारं कृत्वा एव ज्वालाद्वीपपरिसरः त्यक्तव्यः इति।

उग्रदत्तस्य मनसि विचारकोलाहलः- ''सुदर्शनराजस्य पुत्री चन्द्रलेखा अरुद्रः च तस्य दुष्टस्य वशे स्तः। तौ उभौ अपि बन्धनात् विमोचनीयौ। रक्तबिन्दुः एकः अपि यथा न पतेत् तथा एतस्य साधनं कथम्? तस्य गलबन्धः वा करणीयः, जले वा सः मज्जनीयः। कन्धस्य वचनं सत्यं यत् एतस्य मारणम् असाध्यम् एव इति। एकपादः मनुष्यः सन् राक्षसानाम् अपेक्षया अपि अधिकबलशाली अस्ति। न जाने, केन तपसा



कस्य देवस्य अनुग्रहेण एषा शक्तिः प्राप्ता इति। एतस्य मरणम् एव न स्यात् वा?"

तदा कन्धः उक्तवान्-"एकपादस्य मारणम् एव अतीव क्लिष्टम्। कदाचित् यदा सः एकाकी सञ्चरन् आसीत् तदा मम भटाः तं गृहीतवन्तः। यावत् मम सैनिकाः तस्य मारणार्थम् उद्युक्ताः ततः पूर्वम् एव सः खड्गेन स्वमुखे व्रणम् उत्पाद्य रक्तं स्रावितवान्। तस्य रक्तस्य दर्शनेन मम भटाः तत्स्थाने एव मरणं गतवन्तः" इति।

"एवं तर्हि तस्य दृष्टिपथे स्थितिः एव अपायं जनयति इति किल सिद्धम्? तस्य मारणार्थम् अन्यः कोऽपि उपायः न स्यात् वा? मार्गम् अजानन् भवान् अस्माकं साहाय्यं प्रार्थयितुं न अर्हति। भवता कोऽपि उपायः एतस्मिन् विषये चिन्तितः स्यात् एव" इति कन्धम् उक्तवान् उग्रदत्तः।

"उपायः कोऽपि न चिन्तितः। इतः परं चिन्तनीयः" इति उक्तवान् कन्धः।

एकपादस्य दुर्गं निर्निमेषदृष्ट्या पश्यन् अलोचनामग्नः रुद्रः उक्तवान् - "तत् दुर्गम् अस्मद्वशे प्रथमम् आगच्छतु नाम। अनन्तरं एकपादस्य मारणं चिन्तयिष्यामः। दैवानुग्रहः यदि स्यात् तर्हि समये कोऽपि उपायः स्फुरेत् एव। अतः दुर्गस्य वशीकरणार्थं व्याघ्रचर्म-धारिणां मारणार्थं च अपेक्षिता शक्तिः प्रथमं सम्पादनीया। राक्षसाः तु शतं जनान् सकृत् मारयितुं समर्थाः। अतः एतत् बलम् आधारीभूत्य कार्यस्य आरम्भः उचितः इति मम अभिप्रायः" इति।

'एषः रुद्रः पितृतुल्यस्य उग्राक्षस्य मरणम् एव इच्छति इति भाति। अन्यथा योग्यम् मार्गम् अविचिन्त्य उग्राक्षम् अपाये प्रेरयितुं कथं वा उद्युक्तः भवेत्? अथवा अहं किमर्थम् वा रुद्रे संशयं प्रकटयामि? उग्राक्षस्य साहाय्यं स्वीकरणम् एव विद्यमानेषु उत्तमः मार्गः। बलशालिनः प्राणभयरहिताः एव एतान् व्याघ्रचर्मधारिणः भयङ्करपक्षिणः च मारयितुं समर्थाः, न अन्ये। एकपादस्य मारणोपायम् अजानद्भिः अपि अस्माभिः दैवे विश्वस्य अग्रे गन्तव्यम्' इति आलोचयन् अस्ति उग्रदत्तः।

तदा कन्धः उग्रदत्तस्य समीपम् आगत्य

पृष्टवान् -"प्रियमित्र! भवान् किं चिन्तयन् अस्ति? उग्रदत्तस्य साहाय्यप्राप्त्यर्थं दूतः प्रेषणीयः वा न वा?" इति।

"उग्राक्षस्य साहाय्याप्राप्तिं विना कः अन्यः मार्गः अस्ति इदानीम्? किन्तु एतदर्थं कः गच्छतु इति अहं चिन्तयन् आसम्। अहम् एव गच्छामि वा?" इति पृष्टवान् उग्रदत्तः।

तदा रुद्रः अग्रे आगत्य –"भवान् अत्रैव तिष्ठतु। अहम् एव कपिलपुरं गत्वा वस्तु–स्थितिम् आद्यन्तं निवेद्य साहाय्यम् स्वीकृत्य यावच्छक्यं तावच्छीघ्रम् प्रत्यागमिष्यामि" इति उत्साहेन उक्तवान्।

एतं प्रस्तावं कन्धः उग्रदत्तः च अङ्गी–कृतवन्तौ। कन्धः एकम् अनुचरम् आहूय उक्तवान्- "भोः, एतं रुद्रं भयङ्करपक्षिणः उपरि आरोप्य गत्वा कपिलपुरराज्यस्य अरण्ये अवतारयतु" इति।

तदा सः असम्मतिं सूचयन् उक्तवान् -"श्रीमन्! एतम् उग्रदत्तं तदनुचरौ च अपहर्तुं यदा व्याघ्रचर्मधारिणः प्रयत्नम् आरब्धवन्तः तदारभ्य तत्र प्रजाः राक्षसाः च रक्षणकार्यम् आरब्धवन्तः सन्ति। यदि वयं केनापि कारणेन तस्मिन् प्रान्ते अवतरेम तर्हि क्षणमात्रेण ते अस्मान् मारयिष्यन्ति। एकं शब्दम् अपि वक्तुम् अवकाशं न त्यजन्ति ते। एतां वार्तां भवान् अपि जानीयात् एव" इति।

उग्रदत्तः क्षणकालम् आलोच्य उक्तवान्- "तर्हि, रुद्रः एवं करोतु यत् सः पूर्वम् आत्मनः अभिज्ञानं ज्ञापयितुं स्ववस्त्रेषु अन्यतमं



रक्षकाणां मध्ये पातयतु। अहम् उग्राक्षम् उद्दिश्य एकं पत्रम् अपि लिखित्वा ददामि। तदपि वस्त्रेण सहैव सः पातयतु। एतस्य प्राप्तेः अनन्तरं ते मारणसाहसे उद्युक्ताः न भवेयुः। मया लिख्यमानं पत्रं वस्तुस्थितिं निवेदयिष्यति" इति।

एषः युक्तः उपायः इति सर्वे अङ्गी–कृतवन्तः। प्रातःकालानन्तरं यद्यत् करणीयं तत्सर्वम् अनुचरान् उक्त्वा कन्धः उग्रदत्तेन सह शयनार्थं प्रस्थितः। उग्रदत्तनिमित्त विशेषशय्या सज्जीकृता आसीत्। शयनगृहं प्रविश्य शुभरात्रिम् उक्तवान् उग्रदत्तः।

स्वदुर्गस्य पुरतः शिलायाः उपरि उपविश्य 'उग्रदत्तादीनां का वा गतिः स्यात्?' इति



दिने एव अधः अवतर्तुं प्रयतमानाः सन्ति। रक्षणकार्ये उद्युक्ताः अस्मदीयाः तान् उद्दिश्य बाणादीन् गदाः च क्षिपन्तः सन्ति। ते तु किमपि भूमौ क्षित्वा इतोऽपि आकाशे एव सञ्चरन्तः सन्ति। तैः पातिते ग्रन्थौ किमस्ति इति वयं न जानीमः। अस्मासु कोऽपि तं ग्रन्थिं न स्पृष्टवान् अपि" इति।

"कुत्र सः ग्रन्थिः? तावत् बृहदाकारकः वा सः? भीतिजनकं किं वा स्यात् तत्र? मानवानां सहवासतः भवन्तः अपि किं भीरवः संवृत्ताः? ग्रन्थेः परीक्षणे, अत्र आनयने वा कः क्लेशः आसीत् भवताम्?" इति असमाधानेन पृष्टवान् उग्राक्षः।

"सः ग्रन्थिः वृक्षाणां मध्ये कुत्रापि पतितः अस्ति। अस्मदीयाः तस्य अन्वेषणे उद्युक्ताः सन्ति अपि" इति उक्तवन्तौ राक्षसानुचरौ।

"पतनस्थलम् अज्ञात्वा, पतितस्य वस्तुनः स्वरूपम् अपि अज्ञात्वा एव एवं कोलाहलं कृतवन्तौ वा भवन्तौ? प्रशंसायोग्यम् अस्ति भवतोः धैर्यम्। गच्छाम तावत् तत्रैव" इति उक्त्वा उग्राक्षः अनुचराभ्यां सह ततः प्रस्थितवान्।

ते अरण्यमार्गेण किञ्चिद्दूरं अग्रे गतवन्तः। तत्र एकत्र शिलाराशेः पार्श्वे वृक्षाणाम् अधः स्थित्वा केचन राक्षसाः प्रजाः च कोलाहलं कुर्वन्तः आसन्। सर्वेषाम् अपि दृष्टिः वलयाकारेण परिभ्रमतः भयङ्कर-पक्षिणः उपरि एव आसीत्।

चिन्तयन् आसीत् उग्राक्षः। तदा तत्र आगतौ राक्षसानुचरौ कातरस्वरेण उक्तवन्तौ- "प्रभोः, काचित् आपत् आगता इति भाति। भयङ्करपक्षी..., वयः मानवाः..., बहोः कालतः आकाशे सञ्चरन्ति। तैः पातितं किमिति वयं न जानीमः" इति।

"कः अपायः? कुतः सम्प्राप्तः? भवन्तौ किं दृष्टवन्तौ? वस्तुस्थितिं प्रथमं निरुद्वेगं कथयताम्। एषा एव वा वार्तानिवेदनरीतिः?" इति कोपेन पृष्टवान् उग्राक्षः।

स्वनायकस्य कोपं दृष्ट्वा भीतयोः तयोः अन्यतरः कथञ्चित् उद्वेगं शमयित्वा सहजस्वरेण उक्तवान् -"त्रयः ज्वालाद्वीप-वासिनः भयङ्करपक्षिणम् आरुह्य आगत्य



उग्राक्षस्य आगमनं ज्ञात्वा कश्चन राक्षसः समूहात् निर्गत्य उग्राक्षस्य सम्मुखम् आगतवान्। जनाः केचन तम् अनुसृतवन्तः। तस्य राक्षसस्य हस्ते वर्णमयम् एकं वस्त्रं दण्डे बद्धम् एकं पत्रं च आसीत्।

सः तदुभयम् अपि उग्राक्षाय प्रदर्शयन् उक्तवान्- "आकाशे भयङ्करपक्षिणः उपरि त्रयः सन्ति। ते तु भल्लूकचर्म धृतवन्तः सन्ति। एषः वेषः अस्माकं वञ्चनार्थं धृतः स्यात् वा इति अस्माकं सन्देहः। तैः एतत् उभयं पतितं, पश्यतु" इति। तत्र स्थितानां सर्वेषां मुखे कुतूहलं भयं च स्फुटं दृश्यते स्म।

उग्राक्षः तदुभयम् अपि स्वीकृत्य पत्रम् उद्घाट्य पश्यन्- "अत्र मानवभाषया किमपि लिखितम् अस्ति। अनक्षरज्ञः अहम् एतत् कथं पठेयम्? भोः मानव! एतत् पठतु। अत्र किं लिखितम् अस्ति इति वदतु च" इति उक्त्वा समीपस्थम् एकं पुरुषं स्वसमीपम् आहूय तस्य हस्ते तत् पत्रं दत्तवान्।

पत्रं पठित्वा सः पुरुषः सन्तोषेण उक्तवान्- "भोः राक्षसेश्वर ! भवतः पुत्रः उग्रदत्तः ज्वालाद्वीपतः एतत् पत्रं प्रेषितवान् अस्ति। अत्र लिखितम् अस्ति यत् आकाशे उपरि स्थितेषु एकः रुद्रः इति, अन्यौ द्वौ तु व्याघ्रचर्मधारिणां वैरिणौ अस्माकं सहायौ भल्लूकचर्मधारिणौ इति च" इति।

"अहो हो! मम पुत्रस्य उग्रदत्तस्य प्राणापायः तु कोऽपि न जातः। सः सुखेन कुत्रापि अस्ति। देवः दयालुः। मया तस्य शिक्षणव्यवस्था कृता यत् तत् महते उपकाराय अभवत्। सः कदाचित् वा अरण्यराज्यं प्रत्यागच्छेत् एव इति मम मनसि दृढः विश्वासः आसीत्। किन्तु सः स्वयम् अनागत्य रुद्रं किमर्थं प्रेषितवान्? तादृशं कार्यगौरवं तस्य किं स्यात्, येन सः स्वयम् आगन्तुं न शक्तवान्? अस्तु तावत्, रुद्रस्य दर्शनेन सर्वं स्वयं ज्ञायते एव। किमर्थं मनसि वृथा विकल्पः?" इति आलोच्य उग्राक्षः आदिष्टवान् -"भयङ्करपक्षिणाम् उपरि स्थिताः निर्भयम् अवतरन्तु नाम। संज्ञया तान् तथा सूचयन्तु" इति।

एतत् श्रुत्वा सर्वे ततः विकीर्णाः। केचन



धारिणां बन्धने स्तः। तेषां व्याघ्रचर्मधारिणां नायकस्य एकपादस्य मरणेन एव तयोः बन्धविमुक्तिः स्यात्, न अन्यथा। अतः भवता साहाय्यं करणीयम् इति प्रार्थयति उग्रदत्तः'' इति उक्तवान् रुद्रः।

''मम पुत्रः मम साहाय्यं प्रार्थयति इत्यस्य कः अर्थः? पुत्रेण यत् क्रियते तत् ममापि अनुमतम् एव। आवयोः मध्ये कः भेदः, येन सः मां साहाय्यं प्रार्थयेत्? मम अनन्तरं स एव खलु एतस्य अरण्यराज्यस्य प्रभुः? मम साहाय्यं प्रार्थनीयं नास्ति एव। मम प्राणाः तदर्थम् एव सन्ति'' इति उद्वेगपूर्णस्वरेण उक्तवान् उग्राक्षः।

यदा उग्राक्षस्य उद्वेगः शान्तः तदा रुद्रः ज्वालाद्वीपस्य परिस्थितिं निवेद्य 'तत्र पक्षद्वयम् अस्ति, तयोः मध्ये परस्परविरोधः अपि अस्ति' इति सूचितवान्। भल्लूकचर्मधारिणां नायकस्य कन्धस्य परिचयम् अपि उक्तवान्।

''भवद्भिः नौकाम् आरुह्य ज्वालाद्वीपं प्रति प्रयाणं करणीयम्। दिनत्रयस्य समुद्रप्रयाणेन भवन्तः प्रायः तं द्वीपं प्राप्तुं शक्नुवन्ति। भवद्भिः सह मार्गदर्शकत्वेन एषः भल्लूकचर्मधारी स्थास्यति'' इति उक्त्वा आत्मना सह स्थितस्य भल्लूकचर्मधारिणः परिचयं कारितवान् रुद्रः।

अनन्तरं रुद्रः उग्राक्षस्य अनुमतिं प्राप्य तं भल्लूकचर्मधारिणं तत्रैव त्यक्त्वा अपरेण सह भयङ्करपक्षिणम् आरुह्य ततः निर्गतवान्।

शिलाराशिम् आरुह्य हस्तं चालयन्तः वृक्षशाखां हस्ते स्वीकृत्य इतस्ततः चालयन्तः च अधः आगन्तुं संज्ञां कृतवन्तः। भयङ्करपक्षी अधोमुखम् अवतरन् उग्राक्षस्य समीपे एव भूमौ अवतीर्णवान्। पक्षिणः उपरि उपविष्टः रुद्रः सन्तोषेण अधः अवतीर्य धावन् उग्राक्षस्य समीपम् आगतवान्।

रुद्रं दृष्ट्वा उग्राक्षः अपरिमितं सन्तोषम् अनुभूतवान्। हस्तद्वयेन तम् उन्नीय परितः भ्रामयन् तम् अधः अवतार्य पृष्टवान् उग्राक्षः -''उग्रदत्तः कुशली खलु? सः भवता सह किमर्थं न आगतवान्? अरुद्रस्य का वार्ता?'' इति।

''उग्रदत्तः कुशली। अरुद्रः सामन्तराजस्य सुदर्शनस्य पुत्री चन्द्रलेखा च व्याघ्रचर्म-



उग्राक्षः स्वसहचरेषु चतुरान् पञ्चशतं जनान् एतत्कार्यार्थं स्वीकृतवान्। तैः सह ज्वालाद्वीपम् उद्दिश्य प्रस्थितवान् च। महारण्यमार्गेण गच्छन्तः पर्वतान्, खातान्, नदींश्च अतिक्रम्य ते सप्तदिनात्मकप्रयाणेन समुद्रतीरं प्राप्तवन्तः।

राक्षसेषु बहवः जन्मनि इदंप्रथमतया समुद्रं पश्यन्तः सन्ति। ते अपारं जलराशिं दृष्ट्वा क्षणकालं स्तब्धाः। ते सन्देहेन परस्परं वदन्ति स्म-"एतस्य महासमुद्रस्य मध्ये भूमिः कथं वा भवेत्? अत्र कापि वञ्चना स्यात् एव। अस्माकं मारणार्थं कृतः उपायः स्यात् एषः" इति।

एषः वार्तालापः उग्राक्षेण अपि श्रुतः। सः रौद्ररूपं धृत्वा गर्जितवान् -"उग्रदत्तेन प्रेषितायां वार्तायां भवतां सन्देहः वा? रुद्रः स्वयम् आगतवान् आसीत् इति स्मरन्तु। गच्छन्तु, वृक्षान् आनीय पञ्चाशत् उडुपान् निर्मान्तु। श्रद्धया कार्यं कृतं चेत् अपायः कुतः? सन्देहः एव अपायं स्वागतीकरोति। संशयात्मा विनश्यति। कार्यस्य आरम्भः भवतु" इति।

उग्राक्षस्य वचनैः धैर्यम् आत्मविश्वासं च प्राप्य राक्षसाः अरण्यं प्रविष्टवन्तः। महावृक्षान् पातयित्वा शाखादिकं कर्तयित्वा दृढाभिः लताभिः महावृक्षान् सम्यक् बद्धवन्तः। सुदृढाः उडुपाः सिद्धाः।

एकस्मिन् प्रातःकाले यावत् ते सर्वे समुद्रप्रयाणार्थं सिद्धाः आसन् तावता चित्रसेनेन प्रेषितः कश्चन दूतः तत्र आगतवान्। वार्तालापेन ज्ञातं यत् चित्रसेनः ज्वालाद्वीपस्य परिस्थितिं जानाति इति, यदि आवश्यकं तर्हि चित्रसेनः सैन्यबलं प्रेषयितुं सिद्धः अस्ति इति च।

दूतः एतदपि उक्तवान्-"भवतः कुमारः व्याघ्रचर्मधारिभिः अपहृतः इति श्रुत्वा अस्माकं महाराजः राज्ञी च अतीव खिन्नौ। दुःखसागरे निमग्नौ तौ मद्द्वारा सन्तापसूचनां प्रेषितवन्तौ। सामन्तराजस्य सुदर्शनस्य पुत्री अपि व्याघ्रचर्मधारिभिः अपहृता इति तु तयोः

अन्यत् दुःखम्। सुदर्शनः पूर्वं नागवर्मणा सह युद्धे बहुधा महाराजस्य साहाय्यं कृतवान् आसीत्। सः माहाराज्ञ्याः दूबबन्धुः अपि। युवराज–चन्द्रलेखयोः विवाहः यदि प्रचलेत् तर्हि युक्तं भवेत् इति तयोः आशयः'' इति।

दूतस्य वचनं श्रुत्वा उग्राक्षः कोपाविष्टः अभवत्। सः कोपेन गदाम् उन्नीय गर्जयन् तं दूतम् उक्तवान्- ''मम उग्रदत्तः तयोः युवराजः कथं भवेत्? सः मम कुमारः। मम कुमारस्य विषये सन्तापं प्रकटयितुं भवतः महाराजस्य राज्ञ्याः च कः अधिकारः? इतः गत्वा एतत् वचनं यथाश्रुतं महाराजाय निवेदयतु। कोऽसौ सामन्तराजः सुदर्शनः? तस्य पुत्री चन्द्रलेखा मत्पुत्राय योग्या वा न वा इति निर्णेता अहं खलु? भवतः महाराजस्य अत्र कः अधिकारः? गच्छतु इतः। धावतु'' इति।

'इतः परम् अपि अहं यदि अत्र तिष्ठेयं तर्हि मम शिरः सहस्रधा भग्नं भवेत्'' इति चिन्तयन् सः दूतः विना वचनं ततः पलायितवान्।

अनन्तरम् उग्राक्षस्य आज्ञानुसारं राक्षसाः उडुपान् जले प्लावयित्वा आरूढवन्तः। सुगमगमनार्थं चर्मनिर्मिताः पटाः स्तम्भेषु बद्धाः। अग्रे स्थितायां नौकायां सः भल्लूक–चर्मधारी उपविष्टः आसीत्।

तेषां नौकाः निर्विघ्नतया पूर्वदिशम् उद्दिश्य प्रयाणं कृतवत्यः। एकदिनं यावत् प्रयाणं कृतवन्तः ते राक्षसाः। अनन्तरदिने प्रातःकाले तैः दूरतः ज्वालाशिखा दृष्टा। ज्वालाः आकाशं स्पृशन्ति इव।

''अहो ज्वालाद्वीपः!'' इति राक्षसाः आश्चर्येण सन्तोषेण च उद्गारं प्रकटितवन्तः। अत्रान्तरे ज्वालाद्वीपतः कृष्णवर्णीया आकृतिः काचित् आकाशमार्गेण आगता। सः आकारः यदा समीपम् आगतः तदा ज्ञातं यत् सः कश्चन भयङ्करपक्षी इति। राक्षसानां नौकायाः उपरि सः पक्षी आगच्छत्।

(अग्रिमसञ्चिकायां समाप्ता भविष्यति।)





# सुगुणी गुणशेखरः

प्रतिदिनम् अपि यथापूर्वं सूर्योदयः सूर्यास्तः च भवति चेदपि कार्यवैविध्य-कारणतः जनाः उत्साहं प्राप्नुवन्ति। त्रिविक्रमः तु कार्ये वैविध्यं नास्ति चेदपि खेदं अननुभवन् यथापूर्वं वृक्षस्य समीपं गतवान्। शवं वृक्षात् अधः अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्- "अये राजन्! येन भवता प्रजानां कष्टकार्पण्यादीनां विषये चिन्तयता न्यायेन राज्यपालनं करणीयम् आसीत्, तादृशः भवान् एवं मध्यरात्रे श्मशाने अटन् अस्ति खलु? कोऽपि नीचः भवन्तम् एतस्मिन् कार्ये प्रेरितवान् इति अहं भावयामि। येषां बुद्धिः स्तिमिता न भवति तादृशानां साहाय्यकरणम् अपायाय एव। भवतः जागरणार्थम् एतम् अंशम् अहं कथाद्वारा निरूपयामि। श्रद्धया शृणोति चेत् मार्गायासः अपि न्यूनः भवेत्" इति।

## वेतालकथा



अनन्तरं बेतालेन कथा आरब्धा-

अवन्तीदेशस्य शासकस्य नाम राज्य–पालः। तस्य पुत्रः शौर्यपालः। शौर्यपालस्य नाम्नि केवलं शौर्यम्। किन्तु व्यवहारे सः सर्वथा भीरुः। बाल्यतः आरभ्य तस्य व्यवहाराः रूक्षाः एव आसन्।

शौर्यपालस्य मन्त्रिकुमारे गुणशेखरे विशेषस्नेहः। गुणशेखरः सुगुणी महामेधावी च आसीत्।

शौर्यपालस्य मन्दबुद्धितां जानन् राज्यपालः गुणशेखरं तदा तदा वदति- "वत्स, भवन्तौ सहाध्यायिनौ आत्मीयौ स्नेहितौ च। शौर्यपालः भावी महाराजः। सः यदा महाराजः भविष्यति तदा भवान् महामन्त्री भविष्यति। अतः शौर्यपालः सम्यक् राज्यपालनं यथा कुर्यात् तथा करणं भवतः उपरि अस्ति। भवता एव सः सन्मार्गं आनेतव्यः, विवेकः बोधनीयः च" इति।

गुणशेखरः अवकाशं प्रतीक्षमाणः तदा तदा शौर्यपालं विवेकं बोधयति। किन्तु तथा बोधनं जले होम इव, समुद्रे वृष्टिः इव व्यर्थं भवति स्म।

एवं स्थिते कदाचित् गान्धारदेशस्य राजा सिंहबलः राज्यपालाय एकां वार्तां प्रेषितवान्। सिंहबलस्य पुत्र्याः कल्याणलतिकायाः विवाहस्वयंबरः निश्चितः आसीत्।

स्वयंबरः विशिष्टरीत्या आयोजितः अस्ति। स्वयंबरे तिस्रः परीक्षाः भवन्ति। उत्तमकुले जातः यः कोऽपि क्षत्रियः अत्र भागं ग्रहीतुम् अर्हति। एतत्सम्बन्धिनः विशेषनियमाः गान्धारदेशस्य राजधान्या गार्गेयपुरे ज्ञातव्याः आसन्।

एतया वार्तया सह कल्याणलतिकायाः भावचित्रम् अपि प्रेषितम् आसीत्। राज्यपालः एतत्सर्वं श्रुत्वा मौनम् आश्रितवान्। शौर्यपालः तु कल्याणलतिकायाः चित्रं दृष्ट्वा व्यामुग्धः। 'कथञ्चित् एषा परिणेतव्या एव' इति निश्चितवान् सः।

सः स्वकीयं निश्चयं गुणशेखराय सूचयित्वा उक्तवान् "मया कल्यणलतिका परिणेतव्या एव। अतः आवां गार्गेयपुरं गच्छाव" इति।

तदा गुणशेखरः उक्तवान्- "स्वयंबरार्थं



सचिता: परीक्षा: कीदृशा: इति प्राय: भवान् न जानाति। अनालोच्य गमनेन किमपि प्रयोजनं न सिध्यति'' इति।

''परिक्षाणां स्वरूपं जानन् एव किल मया सह भवन्तम् अपि आगन्तुं वदामि? परीक्षा—स्वरूपं तु विशेषत: तत्र गमनानन्तरम् एव ज्ञायते। मम तु विश्वास: यत् भवान् सर्वा: अपि समस्या: परिहरिष्यति इति। अविलम्बेन गच्छाव तावत्'' इति गमनत्वरां प्रदर्शितवान् शौर्यपाल:।

''गमनार्थं महाराजस्य अनुमति: प्राप्तव्या खलु? शुभकार्येषु ज्येष्ठानाम् आशीर्वाद: अवश्यं प्राप्तव्य:'' इति सूचितवान् गुणशेखर:।

''पिता एतदर्थम् अनुमतिं न दद्यात् एव। तस्य मौनम् एव एतत् सूचयति। सर्वं निवेद्य अवलक्षणं किमर्थं श्रोतव्यम्? आवां स्वयं गच्छाव तावत्'' इति उक्तवान् शौर्यपाल:। गुणशेखर: एतस्य किमपि उत्तरं दातुं न शक्तवान्। अनन्तरदिने गुणशेखर: शौर्यपाल: च गार्गेयपुरं प्रति प्रस्थितवन्तौ। गार्गेयपुरं प्राप्य स्वयंवरनियमान् पूर्णत: ज्ञातवन्तौ च।

नियमा: तु एवम् आसन्- कस्मिंश्चित् भवने एता: परीक्षा: प्रचलिष्यन्ति। पङ्क्ति—रूपेण स्थिता: त्रय: प्रकोष्ठा: परीक्षार्थं सज्जीकृता: सन्ति।

सर्पाणां मध्ये सञ्चार: इति प्रथमा परीक्षा। प्रथमप्रकोष्ठे पादस्थापनार्थम् अपि: अवकाश: यथा न भवेत् तथा सर्पा: परिता: सन्ति। फणाम् उन्नमय्य फूत्कुर्वताम् एतेषां मध्ये गच्छता अभ्यर्थिना द्वितीयप्रकोष्ठं प्रति गन्तव्यम्।

द्वितीयप्रकोष्ठस्य प्रवेशद्वारे एव काचित् युवति: तिष्ठति। ''विषसर्पाणां का प्रतिक्रिया?'' इति सा पृच्छति।

एतस्य प्रश्नस्य उत्तरं यदि समाधानकरं स्यात् तर्हि एव द्वितीये प्रकोष्ठे प्रवेश:।

एतस्मिन् प्रकोष्ठे उभौ ब्राह्मणौ उपविशत:। तयो: एक: एव ब्राह्मण-कुलोत्पन्न:। अपर: कुलान्तरे जात:। अनयो: कतर: ब्राह्मणकुलोत्पन्न: इति यदि निर्दिष्टम् उच्यते तर्हि तृतीये प्रकोष्ठे प्रवेष्टुम् अनुमति:।



तृतीये प्रकोष्ठे भितौ एकं चित्रं स्थापितम् अस्ति। तच्च कल्याणलतिकया चित्रितम्।

तत्र आगतेन चित्रविषये यत् बिवरणं दीयते तत् शृणोति कश्चित् भटः। तेन सः तृप्तः चेत् तं कल्याणलतिकायाः समीपं नयति।

एतत् सर्वं श्रुत्वा गुणशेखरः तीव्रा–लोचनायां मग्नः जातः। शौर्यपालः तु निर्विण्णः सन् आर्तदृष्ट्या गुणशेखरम् एव पश्यति। 'एकस्याम् अपि परीक्षायां मया उत्तर्तुं न शक्यते' इति सः स्वयं जानाति।

''शौर्यपाल! चिन्ता मास्तु। परीक्षास् उत्तरणार्थम् उपायम् अहं सूचयामि। प्रथम–प्रकोष्ठः सर्पैः पूर्णः इति खलु श्रूयते? एवं तर्हि तत्र प्रायः कृतकाः सर्पाः स्युः। द्वित्राः सजीवाः सर्पाः स्युः चेदपि ते दन्तहीनाः स्युः'' इति उक्त्वा तिसृणाम् अपि परीक्षाणाम् उत्तरणोपायं शौर्यपालः यथा सम्यक् गृह्णीयात् तथा सविस्तरं बोधितवान् गुणशेखरः।

एतेन आत्मविश्वासं प्राप्य शौर्यपालः धैर्येण परीक्षां सम्मुखीकर्तुं सिद्धः अभवत्।

गुणशेखरः प्रथमप्रकोष्ठस्य रहस्यं यद्यपि सूचितवान्, तथापि यदा प्रथमप्रकोष्ठः प्राप्तः तदा शौर्यपालस्य मनसि महती भीतिः। शरीरे महत् कम्पनम्। भीत्या एव सः प्रकोष्ठं प्रविश्य नेत्रे निमील्य कथञ्चित् प्रकोष्ठात् बहिः आगतवान्।

द्वितीयप्रकोष्ठस्य द्वारे एव स्थिता काचित् सेविका शौर्यपालं पृष्टवती-''तेभ्यः विष–सर्पेभ्यः भवतः कोऽपि अपायः न जातः खलु?'' इति।

शौर्यपालः दर्पेण एव पृष्टवान् -'' कृतकाः सर्पाः मां किं वा कर्तुं शक्नुवन्ति?'' इति।

सा युवतिः तं प्रणम्य द्वितीयप्रकोष्ठस्य प्रवेशार्थम् अवकाशं दत्तवती।

तत्र उभौ ब्राह्मणबेषधारिणौ हस्ते जपमालां स्वीकृत्य ध्यानमग्नौ आस्ताम्।

शौर्यपालः तौ तीक्ष्णदृष्ट्या पश्यन् -''परीक्षार्थं वा कृतो न स्यात्, राजकुमार्या दीयमानस्य धनस्य निमित्तं अन्यकुलीयेन सह ब्राह्मणस्य उपवेशनं सर्वथा न शोभते। मम देशे एतादृशं कृत्यं यदि प्रवृत्तं स्यात् तर्हि अहं तस्य ब्राह्मणस्य शिरच्छेदम् अकरिष्यम्'' इति कृतककोपेन उक्तवान्।

एतत् वचनं श्रुतवतः तयोः एकस्य मुखं विवर्णं जातम्। कोपः अपि तस्मिन् उत्पन्नः। शौर्यपालः भटाय तं प्रदर्शयन् उक्तवान्- "एषः एव ब्राह्मणकुलोत्पन्नः" इति ।

भटः तं विनयेन नमस्कृत्य तृतीयं प्रकोष्ठं गन्तुं मार्गं प्रदर्शितवान्।

शौर्यपालः तृतीयप्रकोष्ठं प्रविश्य चित्रं दृष्ट्वा किञ्चित्कालं चिन्तनाभिनयं कृतवान्। अनन्तरम् उक्तवान् च- "एतत् कालचक्रम् । सुखदुःखयोः समप्रमाणेन सम्मिश्रणरूपं जीवननामकम् अश्वम् आरुह्य कालपुरुषः गच्छन् अस्ति। काल–पुरुषः इव धीरोदात्तः सन् यः जीवने सदा उद्यमशीलः भवति तादृशम् एव परिणेष्यामि इति भावं चित्रद्वारा सूचितवती अस्ति राजकुमारी" इति।

एतत् श्रुत्वा तृप्तिं प्रदर्शयन् भटः शौर्यपालं विनयेन नमस्कृत्य- "भवान् पार्श्वे स्थितं प्रकोष्ठं प्रवेष्टुम् अर्हति" इति उक्तवान्।

सर्पप्रकोष्ठप्रवेशसन्दर्भे भीतिः शौर्यपालेन यत् प्रदर्शिता आसीत् तां वार्तां राजकुमारी इतः पूर्वम् एव गूढचरद्वारा श्रुतवती आसीत्। पूर्वतनव्यवहारस्य इदानीन्तनव्यवहारस्य च मध्ये साम्यं न दृष्टं राजकुमार्या। 'एतस्य विजयस्य पृष्ठभूमौ कस्यचित् बुद्धिमतः साहाय्यं दृश्यते' इति चिन्तितवती कल्याण–लतिका। शौर्यपालेन सह मन्त्रिकुमारः आगतः अस्ति इति सा जानाति स्म एव।



आगतं शौर्यपालं दृष्ट्वा राजकुमारी उक्तवती -"भवान् तिसृषु अपि परीक्षासु यत् विजयं प्राप्तवान् तदर्थम् अभिनन्दनानि। एतासु यः उत्तीर्णः भवति तेन अन्या अपि परीक्षा सम्मुखीकरणीया" इति।

शौर्यपालः कोपेन पृष्टवान् -"पूर्वं सूचितेषु नियमेषु अप्रविष्टा का इयं परीक्षा?" इति।

कल्याणलतिका विनयेन एव उक्तवती- "कोपेन किमपि न सिध्यति। पूर्वं सूचिताः तिस्रः अपि परीक्षाः स्वबुद्धिमत्तया एव उत्तीर्णाः इति इदानीं चतुर्थपरीक्षायां प्रमाणी– करणीयं भवति, तावदेव। एवं प्रमाणितं भवति चेत् आवयोः विवाहार्थं मम गुरुवर्यः अनुमतिं ददाति" इति।



"कः सः भवत्याः महागुरुः? का सा तदीया परीक्षा?" इति असमाधानेन पृष्टवान् शौर्यपालः।

कल्याणलतिका गुरुनिन्दनं श्रुत्वा व्यथिता सती उक्तवती-"अस्माकं राजगुरुः स्वमन्त्रशक्त्या भवतः प्रामाणिकतां परीक्षते। भवान् स्वबुद्धिमत्तया एव एतासु परीक्षासु उत्तीर्णतां प्राप्तुं न शक्तवान् इत्येतत् सिद्धं चेत् भवता दण्डः अनुभोक्तव्यः। गुरुशापात् कुरूपिता अपि प्राप्तव्या" इति।

"माम् अवमानयितुम् अयं प्रयत्नः। अहम् एतस्य प्रतीकारं साधयिष्यामि एव। अद्य एव राजधानीं गत्वा सैन्येन सह आगत्य भवत्याः पितरं पराजित्य भवतीं बलात् परिणेष्यामि एव" इति कोपेन गर्जितवान् शौर्यपालः।

कल्याणलतिका तु मन्दहासपूर्वकम् एव उक्तवती- "भोः, किमर्थं वृथा आटोपः एषः? समानस्तरीयया मया सह अपि अगौरवेण व्यवहरति किल भवान्। वस्तुतः तु मया आयोजिताम् परीक्षाम् उत्तीर्णः भवतः सहपाठी मन्त्रिकुमारः गुणशेखरः एव, न तु भवान्" इति।

रहस्यस्फोटनेन शौर्यपालस्य अटाटोपः स्तब्धः। सः मूकः इव मौनं स्थितवान्।

"भवान् गन्तुम् अर्हति। भवतः मित्रं गुणशेखरं मत्समीपं प्रेषयतु" इति सूचितवती कल्याणलतिका।

शौर्यपालः शिरः अवनमय्य ततः गतवान्। गुणशेखरं प्रवृत्तं सर्वं निवेदितवान् च।

एतत् श्रुत्वा सम्भाव्याम् आपदम् ऊहितवान् गुणशेखरः। अतः सः शौर्यपालम् उक्तवान् -"भवान् एतत्क्षणे एव इतः गत्वा राजधानीं प्राप्नोतु। अहम् अचिरात् एव आगत्य भवता मिलामि" इति। अनन्तरं सः कल्याणलतिकायाः समीपं गतवान्।

गुणशेखरस्य प्रज्ञासदृशं सुन्दरम् आकारं दृष्ट्वा अतीव सन्तुष्टा कल्याणलतिका।

सा पुरतः स्थितम् आसनं प्रदर्शयन्ती उपवेष्टुं सूचयित्वा उक्तवती- "मया आयोजितासु परीक्षासु प्रत्यक्षं भागम्

अगृहणन् अपि भवान् जयं प्राप्तवान्। विजयलक्ष्म्या सह एषा अहम् अपि वरणीया इति प्रार्थयामि'' इति।

गुणशेखरः मन्दहासं प्रकटयन्- ''राजकुमारि! परीक्षायाम् यः प्रत्यक्षं भागं गृहणाति स एव अभ्यर्थी इति उच्यते। सः एव जयम् अपजयं वा प्राप्तुम् अर्हः। ये तु उत्तरं जानन्ति तेषां तु स्वरूपयोग्यता भवति। किन्तु जयम् अपजयं वा प्राप्तुम् अर्हता न भवति'' इति उक्तवान्।

कल्याणलतिका तस्य वचनं श्रुत्वा मन्दं हसन्ती एव उत्थाय ततः निर्गतवती।

तस्याः हासस्य कारणं चिन्तयन् गुणशेखरः ततः निर्गत्य शौर्यपालेन मिलितवान्।

तौ स्वनगरं प्राप्य राज्यपालाय प्रवृत्तं सर्वं निवेदितवन्तौ। एतत् सर्वं श्रुत्वा राज्यपालः गुणशेखरम् उक्तवान्- ''श्वः अस्माभिः मृगयार्थम् अरण्यं गन्तव्यम् अस्ति। भवान् सिद्धः भवतु'' इति।

अनन्तरदिने राज्यपालः गुणशेखरः च मृगयार्थम् अरण्यं गतवन्तौ। अरण्ये एकत्र राज्यपालः अकस्मात् खड्गं हस्ते स्वीकृत्य गुणशेखरस्य उपरि आक्रमणार्थम् उद्युक्तः जातः।

एतत् आक्रमणं पूर्वम् एव जानन् इव गुणशेखरः महाराजस्य हस्तं स्वहस्तेन दृढं गृहीत्वा -''प्रभो, भवतः पुत्रस्य बुद्धिहीनता



यत् प्रकटिता अभवत् तत्र कारणं गान्धार-देशस्य राजकुमार्याः कल्याणलतिकायाः तीक्ष्णबुद्धिः एव, न तु मम स्वार्थबुद्धिः'' इति उक्तवान् । महाराजं बलात् अश्वात् पातयित्वा वेगेन स्वकीयम् अश्वं चालितवान् च।

ततः प्रस्थितः सः साक्षात् गान्धारदेशं गतवान्। कल्याणलतिकां दृष्ट्वा 'विवाहार्थम् अहं सिद्धः अस्मि' इति तां सूचितवान् च।

अनन्तरम् अल्पेषु एव दिनेषु शुभे मुहूर्ते कल्याणलतिका-गुणशेखरयोः विवाहः सवैभवं सम्पन्नः। गुणशेखरः सप्ताहाभ्यन्तरे एव श्वशुरस्य सैन्येन सह प्रस्थाय अवन्ति-देशस्य उपरि आक्रमणं कृत्वा राज्यपालं

जित्वा तदीयं सिंहासनं स्ववशे स्थापितवान्।

वेतालः एवं कथां समाप्य अवदत् ''एतस्यां कथायां वस्तुतः बुद्धिहीनः कः? मन्त्रिकुमारः गुणशेखरः कल्याणलतिकां परिणीय स्वराज्यस्य उपरि एव आक्रमणं कृतवान्। एवं तर्हि सः देशद्रोही न वा? गुणशेखरः यदा विवाहं निराकृतवान् आसीत् तदा कल्याणलतिका भावगर्भं हासं प्रकटितवती। एतस्य कः अर्थः? एतेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान् -''राज्यपालः शौर्यपालः च वस्तुतः बुद्धिहीनौ। पुत्रस्य बुद्धिहीनता– प्रकाशनेन प्रकटितः कोपः, पुत्रं विहाय कल्याणलतिका गुणशेखरं परिणेतुम् इष्टवती इति श्रुत्वा ईर्ष्या च राज्यपालस्य बुद्धिहीनतां प्रबलं प्रतिपादयतः। सः मेधाविनः राजनिष्ठस्य भाविमन्त्रिणः गुणशेखरस्य हननं विना कारणं कर्तुम् उद्युक्तः। एतेन गुणशेखरे स्थिता स्वामिभक्तिः लुप्ता। सः स्वराज्यं बुद्धिहीनेभ्यः रक्षयितुम् इच्छन् कल्याणलतिकां परिणीय, श्वशुरसैन्यं स्वीकृत्य अवन्तिदेशं वशीकृतवान्। शौर्यपालस्य मूर्खतां स्वयं दृष्टवती राजकुमारी। राज्यपालस्य मूर्खतां तर्कयित्वा भाविनीं घटनां भावगर्भितेन हासेन सूचितवती। तथापि गुणशेखरः प्रयत्नात् विमुखः न जातः। किन्तु यदा 'मां मारयितुम् उद्युक्तः राज्यपालः पुत्रव्यामोहवशात् गान्धारस्य उपरि आक्रमणं कुर्यात् तदा देशद्वयस्य अपि हानिः' इति ज्ञातं तदा सः कल्याणलतिकायाः विवाहार्थं सिद्धः जातः। अतः गुणशेखरस्य व्यवहारः सर्वथा युक्तः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



अस्माकं देशस्य वैशिष्टयानि-

# हम्पीनगरम्

चतुर्दशे शतके हम्पीनगरम् निर्मितम्। एतत् नगरं बेङ्गलूरुतः ४०० की. मी. दूरे तुङ्गभद्रानदीतीरे निर्मितम् अस्ति। पूर्वं विजयनगरसाम्राज्यस्य राजधानी सत् एतत् नगरं सुविख्यातम् आसीत्।





हरिहरनामकः राजकुमारः विद्यारण्य-स्वामिनः दर्शनं प्राप्य कदाचित् निवेदितवान् यत् मया अरण्ये मृगयासन्दर्भे शशैः अनुधाव्यमाना शुनकाः दृष्टाः इति। "एतत् स्थलम् एव राजधानीनिर्माणार्थं योग्यम्" इति विद्यारण्यस्वामिनः सूचितवन्तः।

विद्यारण्यस्वामिनः भगवतीं भुवनेश्वरीं ध्यात्वा प्रार्थितवन्तः यत् हरिहररायाय तत्सोदराय बुक्करायाय च राजधानी-निर्माणार्थं धनं ददातु इति। एतस्याः प्रार्थनायाः फलरूपेण एकस्यां रात्रौ हरिहरराय-बुक्करराययोः समक्षं सुवर्णवृष्टिः जाता।





प्रथमं हरिहररायः तदनन्तरं बुक्करायः च राज्यशासनं कृतवन्तौ। सुप्रसिद्धः वैयाकरणः माधवः तत्सहोदरः सायणः च तस्य मन्त्रिरूपेण कार्यं कृतवन्तौ।

चतुर्षु राजवंशेषु जाताः विजयनगरं शासितवन्तः। तेषु कृष्णदेवरायः जगत्-प्रसिद्धः। (१५०९ – १५२९) कृष्णदेवरायः प्रजापालनदक्षः, कलाप्रियः, कविपोषकः च इति ख्यातः आसीत्। एषः स्वशासनसन्दर्भे अनेकानि अपूर्वभवनानि निर्मापितवान्।





पुनः पुनः आक्रमणं कुर्वतः बिजापुर – बीदरप्रभृतीनां शासकान् कृष्णदेवरायः समर्थतया सम्मुखीकृतवान्। तस्य शासनकाले राज्यं निष्कण्टकम् आसीत्।

तथापि यदा बिजापुर – गोल्कोण्ड – अहमदनगर--बीदर सेना युगपत् एव आक्रमणं कृतवत्यः तदा तल्लीकोटे प्रदेशे घोरं युद्धं प्रवृत्तम्। १५६५ तमे वत्सरे समृद्धं हम्पीनगरं शत्रुवशं जातम्। शत्रूणां लुण्ठनेन स्वेच्छाचारेण च असङ्ख्यानि भवनानि धूलिसात् जातानि।





अत्रत्येषु मन्दिरेषु पट्टाभिरामदेवालयः अतीव विशालः। अच्युतरायेण १५३० – १५४२ अवधौ निर्मितम् एतत् मन्दिरम् इदानीं शिथिलावस्थायाम् अस्ति।

बालकृष्णमूर्तिसहितस्य विट्ठलमन्दिरस्य प्राङ्गणं स्थितः शिलारथः तत्कालीनशिल्पस्य अपूर्वम् उदाहरणम्।





विजयनगरकालीनस्य मन्दिरशिल्पस्य अपरम् उदाहरणं चित्ताकर्षकः लक्ष्मीनृसिंहविग्रहः। एतादृशानि शिल्पानि तत्र इतोऽपि बहूनि सन्ति। एवं प्राचीनशिल्पकलायाः वैभवस्य साक्षिभूतम् अस्ति।



# पिशाचयुतकम्

**ब**हुभ्यः वर्षेभ्यः पूर्वं जपानदेशे कस्मिंश्चित् ग्रामे कुचेष्टापरः कश्चन निरुद्योगी युवकः आसीत्। तस्य नाम ओटोको।

एकस्मिन् दिने सः कार्यान्तराभावात् एकं वेणुदण्डं स्वीकृत्य नलिकाकारेण कर्तयित्वा तदाधारेण दूरदर्शकेन इव आकाशं पश्यन् आसीत्। तदा वायौ सञ्चरन् टेङ्गुजातीयः पिशाचः तेन दृष्टः।

टेङ्गुजातीयाः पिशाचाः जपानदेशे तदा तदा मानवानां दृष्टिगोचराः भवन्ति। किन्तु तेषां सहवासः अपायकरः इति जनानाम् अभिप्रायः आसीत्।

ओटोकोमहोदयेन दृष्टस्य पिशाचस्य नासिका अतीव दीर्घा। भुजद्वये अपि पक्षाकारकः अलङ्कारः आसीत्। शुष्कतृणैः निर्मितं विचित्रं युतकं धृतम् आसीत् तेन पिशाचेन।

अभिमुखम् आगच्छन्तं पिशाचं दृष्ट्वा एव ओटोको चिन्तितवान् यत् एतस्य पिशाचस्य युतकं कथञ्चित् मया स्वायत्तीकरणीयम् इति।

यदा पिशाचः भूमौ अवतीर्णः तदा ओटोको वेणुदण्डस्य साहाय्येन आकाशं पश्यन् -"अहो! अपूर्वं दृश्यम्! अत्यद्भुतम्!" इति उद्गारं प्रकटीकृतवान्।

एतत् श्रुतवतः पिशाचस्य कुतूहलं प्रवृद्धम्। सः कूर्दन् ओटोकोसमीपम् आगत्य -"किं तत् दृश्यम्? मह्यम् अपि प्रदर्शयतु" इति अवदत्।

"किम्? किं वदति भवान्? मया महता परिश्रमेण सम्पादितम् एतत् दूरदर्शकं भवते दातव्यं वा? यत् एतत् चन्द्रं, नक्षत्रलोकं, ग्रहप्रपञ्चं च प्रदर्शयति तादृशं भवते ददामि? प्रतिफलरूपेण एतत्समानम् अपूर्वं वस्तु किं ददाति भवान्?" इति पृष्टवान्

"जपानदेशस्य जानपदकथा"



ओटोको।

"भवान् तत् दूरदर्शकं मह्यम् एव ददाति चेत् अपूर्वशक्तिशालिनीं पादरक्षां ददामि" इति अवदत् पिशाचः।

किन्तु पादरक्षाविनिमयेन वेणुदण्डं दातुं न सिद्धः जातः ओटोको। यावत् पिशाचः 'युतकं ददामि' इति न अवदत् तावत् सः पिशाचस्य कुतूहलं वर्धयन् आसीत्। अन्ते युतकं दातुं पिशाचः यदा सिद्धः अभवत् तदा तत् स्वीकृत्य ओटोको वेणुदण्डं दत्तवान्।

पिशाचः महता कुतूहलेन वेणुदण्डद्वारा आकाशं द्रष्टुम् उद्युक्तः।

अत्रान्तरे ओटोको तत् युतकं धृत्वा अदृश्यः अभवत्। यः तत् युतकं धरति सः अदृश्यः भवति स्म।

अदृश्यगमनसामर्थ्येन ओटोको अतीव सन्तुष्टः। सः ग्रामस्य मुख्यमार्गं गत्वा कुचेष्टाम् आरब्धवान्।

ये शिरसि वस्तूनि स्थापयित्वा गच्छन्तः आसन् तेषां वस्तूनि सः पातितवान्। आपणस्थानि वस्तूनि यानि दृष्टानि तानि स्वेच्छया मार्गे इतस्ततः क्षिप्तवान्।

मार्गे गच्छन्तः जनाः तु दिग्भ्रान्ताः। अल्पे एव काले मार्गः निर्मानुषः जातः। जनाः कुत्रापि निलीय मार्गे प्रचलन्तं कोलाहलं पश्यन्तः आसन्।

जनसञ्चाररहिते एतस्मिन् मार्गे कश्चन धनिकः आगतवान्। गाम्भीर्येण गच्छतः तस्य वामकर्णम् बलात् आकृष्टवान् अदृश्यरूपी ओटोको।

सः धनिकः कोपेन परिवृत्य दृष्टवान्। तदा कोऽपि दक्षिणकर्णम् अपि आकर्षति! भीतः सः धनिकः तत्रैव उपविश्य इतस्ततः पश्यति। नागरिकाः तु गृहस्य द्वारस्य पृष्ठतः एव स्थित्वा हसन्तः एतत् विनोदकरं दृश्यम् आस्वादयन्ति।

अत्रान्तरे कोऽपि कृषिकः उत्तमानि वस्त्राणि क्रीत्वा हस्ते स्थापयित्वा तेन मार्गेण आगतवान्।

अकस्मात् तस्य हस्ते स्थितानि तानि वस्त्राणि उद्गतानि । पार्श्वस्थायां मलिनजलस्य कुल्यायां पतितानि च।

अन्यत्र नवाः मीनाः विक्रयणार्थं स्थापिताः आसन्। ग्राहिकाः स्त्रियः अपेक्षितानां मीनानां क्रयणे रताः आसन्।

अत्रान्तरे एकः महामीनः उज्जीवितः इव उत्थाय वायौ गन्तुम् आरब्धवान्। जनाः अपि केचन अनुसृत्य धावितवन्तः। एतन्मध्ये सः मीनः तेषां पुरतः सशब्दम् अपतत्, धूलिमयः जातः च।

एवं दुष्टचेष्टाभिः यथेष्टम् आनन्दम् अनुभवन् ओटोको गृहं गतवान्। द्वारि एव तस्य माता पुत्रस्य प्रतीक्षायाम् आसीत्। एषः ताम् अतिक्रम्य अन्तः गत्वा यतकं निष्कासितवान्, निजरूपेण प्रत्यक्षः अभवत् च। अकस्मात् प्रत्यक्षीभूतं पुत्रं दृष्ट्वा माता आश्चर्यचकिता।



पुत्रः भुक्त्वा यदा निद्रामग्नः जातः तदा माता कुतूहलेन तस्य यतकस्य समीपं गतवती।

"बुद्धिहीनः एषः मम पुत्रः गृहं प्रति किमपि किमपि आनयति" इति वदन्ती सा तत् यतकं अग्नौ स्थापितवती। क्षणमात्रेण यतकं दग्धम् अभवत्।

निद्रातः उत्थितः ओटोको यतकं सर्वत्र अन्विष्टवान्। कुत्रापि तत् यदा न दृष्टं तदा मातरं पृष्टवान्। माता- "निरूपयुक्तं तत् यतकम् अग्नौ स्थापितवती" इति उक्तवती। एषः मातरं स्वेच्छया निन्दन् चुल्लीसमीपं गतवान्।

'यतकस्य प्रभावः भस्मनि अपि भवेत् एव' इति चिन्तयन् ओटोको भस्म एकस्मिन् पात्रे सङ्गृहीतवान्।

गृहस्य पृष्ठतः गत्वा यतकादिकं निष्कास्य भस्मना शरीरम् आपादमस्तकं सम्यक् लिप्तवान्।

यत्र भस्म लेपितं स च भागः अदृश्यः जातः आसीत्। सन्तोषम् अनुभवन् ओटोको इतरत्र अपि भस्म लेपितवान्। अदृश्यतां प्राप्य सः ततः निर्गतवान् च।

सर्वत्र अटन् सः कस्मिंश्चित् स्थले स्थितं जलपात्रं दृष्टवान्। जलं पातुम् आरब्धवान् च। तस्य जलपात्रस्य यजमानः 'गोळ गोळ'

इति जलपानशब्दं श्रुतवान्। बहिः आगत्य यदा दृष्टं तदा जलपात्रस्य समीपे कोऽपि नास्ति। जलपानशब्दः केवलं श्रूयते। क्रमशः नलिकायाः पार्श्वे एकं मुखं केवलं तेन दृष्टम्। आश्चर्यचकितः सः प्रतिक्रियां कामपि प्रदर्शयितुम् अशक्तः सन् भीत्या सर्वं पश्यति।

जलपानेन ओटोको मुखं किञ्चित् आर्द्रं जातम्। यदा भस्म क्षालितम् अभवत् तदा स च भागः दृष्टिगोचरः जातः। एवम् एव चिबुकप्रदेशः अपि दृष्टिगोचरः जातः।

आपणिकः एतत् दृश्यं दृष्ट्वा -"हा देव!" इति उच्चैः आक्रोशनं कृतवान्। अकस्मात् श्रुतात् ध्वनितः भीतस्य ओटोको शरीरे स्वेदः उत्पन्नः। पानजलं शरीरे पतितं च। तत्कारणतः भस्म अपगतम्। तस्य शरीरस्य भागः अपि दृष्टिगोचरः जातः।

'मदीयं रहस्यं प्रकटितम् अभवत्' इति चिन्तयन् ओटोको ततः धावितवान्। आपणिकः, आपणम् आगताः जनाः च तम् अनुसृत्य धावितवन्तः। धावन् ओटोको कस्याञ्चित् कुल्यायां पतितवान्। भस्म जले विलीनम्। उपरि आगन्तुं लज्जाम् अनुभवन् ओटोको शिरोमात्रम् उन्नीय जले स्थितवान्।

अनुसृत्य आगताः जनाः तस्य परिचयं प्राप्य तं जलात् उद्धृतवन्तः। 'किमानो' नामकेन वस्त्रेण तस्य शरीरम् आच्छादितवन्तः।

लज्जाम् अनुभवन् ओटोको पिशाचदर्शनं, वेणुदण्डदानेन कृतं पिशाचवञ्चनं, अपूर्व-युतकप्राप्तिं, युतकस्य दाहकथां च सविस्तरं श्रावितवान् । तस्य कथां श्रुत्वा जनाः उच्चैः हसितवन्तः।

"पिशाचं यत् वञ्चितवान् तस्य फलरूपेण एतादृशम् अपमाननं प्राप्तवान्। उचितः दण्डः एषः" इति वदन्तः ते प्रतिगतवन्तः।

पदे पदे जनानाम् उपहासं श्रुत्वा ओटोको विवेकं प्राप्तवान्। सहजतया एव तस्य दुष्टचेष्टाः विलुप्ताः जाताः।





# कृष्णावतारः

एतस्य प्रपञ्चस्य सृष्टेः आरम्भे कालनेमिः नाम कश्चन महाराक्षसः आसीत्। तस्य शतं शिरांसि, शतं हस्ताः च। अतः तस्य दर्शनेन भीतिः जायते स्म। शतशिखरयुतः कश्चन पर्वतः इव दृश्यते स्म सः।

तस्य शरीरबलम् अपि असदृशम् एव। सः कठोरेण तपसा ब्रह्माणं सन्तोष्य अनेकान् वरान् प्राप्तवान् आसीत् अपि।

तेषु दिनेषु देवदानवानां युद्धं तदा तदा प्रचलति स्म। कदाचित् देवानां जयः, पुनः कदाचित् दानवानां जयः। एतादृशे कस्मिंश्चित् युद्धे देवाः जयं प्राप्तवन्तः। 'इतःपरं दानवाः प्रत्याक्रमणं यथा न कुर्युः तथा करणीयम्' इति भावयन्तः देवाः दानवान् अनुसृत्य गतवन्तः।

एतत् दृष्टवतः कालनेमेः महान् कोपः आगतः। सः दानवनायकान् एकत्रीकृत्य तेषु नवोत्साहं पूरयित्वा इन्द्रस्य उपरि अकस्मात् प्रत्याक्रमणं कृतवान्।

एवम् भवेत् इति देवाः न निरीक्षितवन्तः आसन्। इन्द्रप्रमुखायाः देवसेनायाः कालनेमिप्रमुखायाः दानवसेनायाः च मध्ये घोरं युद्धं प्रवृत्तम्।

एतस्मिन् युद्धे इन्द्रः अपमानकरम् अपजयं प्राप्तवान्। स्वर्गः, भूलोकः, पाताललोकः च कालनेमेः अधीनाः जाताः।

एतत् महत् अपमाननं देवेषु कोऽपि सोढुं न शक्नोति। 'युक्तस्य कालस्य प्राप्तिपर्यन्तं किमपि कर्तुं न शक्यते' इति चिन्तयन् विष्णुः अपि मौनं



स्थितवान्।

'वस्तुतः देवानाम् आपत्काले विष्णुना साहाय्यं करणीयम् आसीत्।' एतत्सन्दर्भे सः मौनम् अस्ति। अतः अत्र किमपि तन्त्रं स्यात्। एतत्सन्दर्भे मया स्वयं विष्णुमूर्तेः समीपं गत्वा चोदनं करणीयम्' इति भावयन् कालनेमिः विष्णोः समीपं गतवान्।

"मधुकैटभयोः हन्ता भवान् एव खलु? दैत्यप्रमुखस्य हिरण्यकशिपोः वक्षःस्थलभेदनं भवता एव कृतम्। बलिचक्रवर्तिनं पातालं प्रेषितवान्। तत्समये भवता त्रयः लोकाः अपि जिताः। अस्माकं दैत्यनारीणाम् अश्रुबिन्दुभिः भवता वनं पोषितम्। इदानीं तस्य सर्वस्य प्रतीकारं साधयितुं भवतः समीपम् आगतवान् अस्मि। अन्तिमक्षणान् गणयतु" इति सगर्वम् उक्तवान् कालनेमिः।

"अये दैत्याधम! ब्रह्मणा वरं प्राप्य भवान् मदोन्मत्तः जातः। यत् प्राप्तं तेनैव तृप्तेन भवितव्यं बुद्धिमता। मदोद्धतः भवान् मां कोपयितुम् आगतवान्। भवतः पूर्वजाः येन मार्गेण प्रेषिताः सः मार्गः इतोऽपि न पिहितः। भवतः आगमनेन मम साहाय्यं जातम्। भवन्तम् अन्विष्य गमनश्रमः न्यूनः जातः। भवन्तम् इदानीम् एव यमपुरीं प्रेषयित्वा देवान् स्वस्थाने स्थापयिष्यामि। युद्धार्थं सिद्धः भवतु" इति उक्तवान् महाविष्णुः।

एतेन वचनेन कुपितः कालनेमिः गदया गरुत्मतः शिरः ताडितवान्। एतेन प्रहारेण गरुडः मूर्च्छितः इव।

अत्रान्तरे महाविष्णुः स्वकरस्पर्शेन गरुडस्य वेदनां दूरीकृत्य स्वशरीरम् आकाशपर्यन्तं वर्धितवान्। विष्णोः अनुग्रहेण गरुडः अपि स्वशरीरं वर्धितवान्।

विश्वरूपी विष्णुः कनिष्ठिकायां स्थितं सुदर्शनचक्रं कालनेमेः उपरि प्रयुक्तवान्। वेगेन गतं सुदर्शनचक्रं कालनेमेः शिरांसि हस्तान् च निर्दयं कर्तितवत्। अन्ते शुष्कवृक्षः इव शिरोहस्तरहितं कालनेमेः शरीरं तत्र आसीत्। गरुडः स्वपक्षं चालयन् वायुम् उत्पादितवान्। तदा तत् शरीरं भूमौ अपतत्।

एतया आकस्मिकघटनया राक्षसाः

दिग्भ्रान्ताः। किं करणीयम् इति अजानन्तः ते तत्रैव स्थितवन्तः। विष्णुः तान् सर्वान् कदलीवृक्षान् इव कर्तितवान्।

"गर्वातिशयेन विष्णोः पुरतः औद्धत्यं प्रदर्शयितुं गतस्य कालनेमेः तदनुचराणां च योग्यं दण्डनं जातम्। विष्णुना युक्तम् एव आचरितम्" इति वदन्तः ब्रह्मादिदेवाः विष्णुसमीपम् आगत्य विविधैः स्तोत्रैः स्तोत्रं कृतवन्तः।

"इतः परं भवतां राक्षसभीतिः न भविष्यति। भवन्तः स्वलोकं यथापूर्वं पालयितुम् अर्हन्ति। यज्ञयागादयः निर्विघ्नं प्रचलन्तु। भोगभाग्यकारणतः प्रमत्तैः न भवितव्यम्। राक्षसानाम् उपरि सदा दृष्टिः भवतु। इदानीन्तनः अपजयः तेषां मनसि सदा धूमायते एव। कदाचित् वा ते प्रतीकारं साधयितुं प्रयत्नं कुर्युः। अतः सर्वदा जागरूकैः भवितव्यम्" इति विष्णुः देवान् बोधितवान्।

अनन्तरं महाविष्णुः क्षीरसागरे शेषशाय्यायां शयनं कुर्वन् योगनिद्रायां मग्नः अभवत्।

एवं योगनिद्रासमये कृतयुगं समाप्तम्। त्रेतायुगस्य अपि अन्त्यम् आसन्नम्। तदा भूभारस्य आधिक्यकारणतः श्रान्ता भूदेवी विलपितुम् आरब्धवती। विलपन्ती सा ब्रह्मणः समीपं गत्वा स्वकीयं कष्टं निवेदितवती। ब्रह्मा तया सह क्षीरसागरं गत्वा योगनिद्रायां लीनं विष्णुं जागरितवान्।

विष्णुमूर्तिः मन्दं नेत्रम् उद्घाटयन् - "किम् एतत्? सर्वे सम्भूय आगतवन्तः खलु? कः





विशेषः? भवन्तः सर्वे कुशलिनः खलु? लोके राक्षसबाधा विशेषतः न स्यात् किल?" इति पृष्टवान्।

ब्रह्मा प्रणम्य उक्तवान् - "देवाधिदेव! महादेव! लोके महाराजानां मध्ये न कोऽपि कलहः। सत्यं धर्मः च लोके स्थिरतया स्तः। यज्ञयागादयः अपि निर्विघ्नतया प्रचलन्ति। देवकार्याणि पितृकार्याणि च सम्यक्तया प्रचलन्ति।

लोके रोगबाधा अपि न दृश्यते। जनाः पूर्णायुः जीवन्ति। नगरे नगरे ग्रामे ग्रामे च जनसङ्ख्यायाः अत्याधिक्यम्।

जनानाम् एतं भारं वोढुं न शक्नोमि इति भूदेवी गदिति। धर्मस्य च्युतिः यथा न भवेत् तथा भूभारन्यूनीकरणार्थं कः उपायः इति वयं न जानीमः। भूदेव्याः विलपनम् अपि द्रष्टुं न शक्नुमः। इदानीं भवान् एव शरणम्। भवान् मेरुपर्वतम् आगत्य इतिकर्तव्यतां बोधयतु इति वयम् अञ्जलिबद्धं प्रार्थयामः" इति।

महाविष्णुः शेषशय्यातः उत्थाय शङ्खचक्रादीनि आभरणानि च धृत्वा गरुडम् आरुह्य मेरुपर्वतं गतवान्। मेरुपर्वते विश्वकर्मणा निर्मितः अतिविस्तृतः भव्यः सभामण्डपः कश्चन आसीत्।

एतस्य सभामण्डपस्य उन्नते आसने विष्णुमूर्तिः उपविष्टवान्। अन्ये अपि उचितेषु आसनेषु उपविष्टवन्तः।

एतां सभां प्रति अष्ट दिक्पालकाः, यक्षाः, गन्धर्वाः, सिद्धाः, विद्याधराः, नागाः, इत्यादयः आगताः आसन्।

अपारं दुःखभारं वहन्ती भूदेवी अपि सभाम् आगतवती।

तस्याः दर्शनमात्रेण सभायां मन्दं परस्परवार्तालापः सर्वत्र आरब्धः। तदा वायुः उत्थाय मौनं स्थातुं सूचितवान्। आगमनकारणं निवेदयतु इति ब्रह्मा भूदेवीम् उक्तवान्।

तदा भूदेवी वक्तुम् आरब्धवती - "मया पुनः वक्तव्यं किम् अस्ति? सर्वं सर्वैः विदितम् एव। महाराजानां संख्या अपरिमिता जाता। जनानां तु संख्या असंख्या एव। एषः भूभारः न्यूनः न

भवति चेत् अहं जीवितुं न शक्नुयाम्। महांविष्णुः एतद्विषये कार्यपरः भवति चेत् सर्वं सुसम्पन्नं भवेत्। भवन्तः महान्तः अत्र सम्मिलिताः सन्ति। यथोचितम् आचरन्तु। किम् अधिकम् अहं वदामि?'' इति।

भूदेव्याः दुःखपूर्णं निवेदनं श्रुत्वा सर्वे तीव्रं सन्तापं प्राप्य एतद्विषये परस्परं चर्चां समालोचनं च कृतवन्तः।

अन्ते ते ब्रह्माणम् उक्तवन्तः - ''भूदेव्याः दुःखस्य अपसारणम् अस्माकं सर्वेषां कर्तव्यम्। सृष्टिकर्ता वयसा ज्येष्ठः च भवान् एव एतस्य कार्यस्य नायकः भवेत्'' इति।



तदा ब्रह्मा उत्थाय सभ्यान् पश्यन् उक्तवान् - ''एतस्य सर्वस्य कारणम् अन्यत् एव अस्ति। एकदा अहं कश्यपमुनिः च समुद्रतीरे उपविश्य तत्त्वविचारे चिन्तयन्तौ आस्व। चन्द्रोदयसमये गङ्गासङ्गमकारणतः उद्‌गतः समुद्रः तत्परिसरम् आक्रम्य आवाम् आर्द्रीकृतवान्।

अहं हसन् समुद्रराजम् उक्तवान् - ''किमेतत् समुद्रराज? शान्तः भवतु'' इति। शान्तः समुद्रः मानवरूपं धृत्वा गङ्गया सह प्रत्यक्षः जातः।

तदा अहं भविष्यद्दर्शनं प्राप्य - ''समुद्रराज! भवान् इदानीं राजसगुणं यत् प्रदर्शितवान् तेन भूमौ राजरूपेण जन्म प्राप्स्यति। मम सूचनानुसारेण भवान् शान्तः जातः। अतः भवान् 'शन्तनुः' इति नाम्ना एतां गङ्गारूपेण परिणीय जीविष्यति'' इति।

तदा समुद्रराजः मां नमस्कृत्य ''पर्वकाले, चन्द्रोदयकाले, वायुवशात् च वृद्धिप्राप्तिः मम स्वभावः। तदनुगुणम् अहम् उद्‌गतवान्। अत्र अनौचित्यं किमस्ति? तत्त्वज्ञः भवान् मां शप्तवान् खलु? किम एतत् उचितम्?'' इति।

''लोकहितं मनसि कृत्य अहं तथा उक्तवान्। भवान् पवित्रे भरतवंशे जन्म प्राप्स्यति। एतस्यां गङ्गायां वसून् जनयन् भवान् तेषां वसिष्ठशापं निवारयिष्यति। अनन्तरं सत्यवतीनामिकां परिणीय वंशोद्धारकौ द्वौ पुत्रौ जनयिष्यति, अन्ते मोक्षं प्राप्स्यति च'' इति उक्तवान् अहम्।

एवं जायमानस्य शन्तनुराजस्य पुत्रस्य विचित्रवीर्यस्य धृतराष्ट्रः पाण्डुः इति पञ्च पुत्राः च



भविष्यन्ति। शतस्य पुत्राणां पञ्चपुत्राणां च मध्ये राज्यकारणतः युद्धं प्रचलिष्यति। एतस्मिन् युद्धे सर्वे राजानः मरणं प्राप्स्यन्ति। लक्षशः गजाः अश्वाः सैनिकाः चापि मरणं प्राप्स्यन्ति। एवंक्रमेण भूभारः न्यूनः भविष्यति। भूदेवी तदा निश्चिन्ता भविष्यति।

कलहकारकस्य कलेः अंशः धृतराष्ट्रस्य पत्न्याः गर्भे, यमस्य अंशः पाण्डोः पत्न्याः गर्भे च प्रवेक्ष्यति। तेन तत्तद्गुणयुताः पुत्राः जनिष्यन्ते। विविधानां देवानां अंशः अपि विभिन्नेषु गर्भेषु प्रविश्य मानवजन्म प्राप्स्यन्ति'' इति।

ब्रह्मणः विवरणं श्रुतवतां सर्वेषां मनसि भविष्यतः स्थूला कल्पना आगता। अत्रान्तरे भगवन्तम् स्मरन् नारदः सभाम् आगतवान्।

सः वीणावादनेन विष्णुं सङ्कीर्तयन्, सभां च रञ्जयन् महाविष्णुम् उक्तवान् - "देवाधिदेव! देवानाम् अंशाः भूमौ अवतरन्ति चेदपि भवतः प्रवेशं विना कार्यसिद्धिः कथं भवेत्? भूमौ भवतः अंशः अपि अवतरेत् एव। भवान् एव इतरेषाम् अपि प्रेरणा उत्साहः च। मुख्यांशं विना केवलैः उपांशैः कार्यं साधयितुम् न शक्यते खलु? अन्यच्च एतैः देवांशैः केनापि साधयितुम् अशक्यं किञ्चित् अस्ति। तत् निवेदयितुम् एव अहं त्वरया आगतवान्।

पूर्वं देवासुरयुद्धे असुराः भवता पराजिताः खलु? ते सर्वे इदानीं मानवरूपेण भूलोके जन्म प्राप्तवन्तः सन्ति। रामेण जितस्य रावणस्य मातुलस्य मधुनामकस्य पुत्रः रामाज्ञानुसारं शत्रुघ्नेन मारितः खलु? तदनन्तरं शत्रुघ्नः मधुवनम् उन्मूल्य मथुरानामकं महानगरं निर्मितवान्। बहुभिः राजभिः पालितं तत् नगरं प्रवृद्धिं गतम् अस्ति।

इदानीं तस्मिन् नगरे कालनेमिराक्षसः कंसनाम्ना उग्रसेनराजस्य पुत्ररूपेण जन्म प्राप्तवान् अस्ति। पुर्वजन्मवासना तस्य इतोऽपि अस्ति एव। सः स्वपितरम् उग्रसेनं कारागारे स्थपयित्वा स्वयं सिंहासनम् आरुह्य विराजमानः अस्ति। कालनेमेः मित्राणि मथुरायां जन्म प्राप्य कंसं सेवमानाः सन्ति। कालिन्दीतीरे वृन्दावनप्रदेशे मथुरापुरे च ते राक्षसाः विशेषतः दृश्यन्ते।

केचन राक्षसाः प्रग्जोतिषपुरे जन्म प्राप्य

नरकासुरस्य साहाय्यं कुर्वन्तः सन्ति। एतेषां राक्षसानां संहारार्थं भवता मानवरूपेण जन्म प्राप्तव्यम् एव। देवाधिदेवेन भवता एव कार्यस्य भारः निर्वोढव्यः।

महाविष्णो! इतः पूर्वम् अपि यदा राक्षसाः प्रबलाः आसन्, यदा च दुष्टशक्तीनां प्राबल्यम् आसीत् तदा सर्वदा भवान् अवतारं प्राप्तवान्। इतरे देवाः यदा सर्वथा असहायाः आसन् तदा भवान् एव देवानां साहाय्यं कृतवान्। भवान् तदा तदा तादृशम् अवतारं न कृतवान् स्यात् तर्हि लोके सच्छक्तीनां ह्रासेन दुष्टशक्तीनां सार्वभौमत्वं च अभविष्यत्। भवत्कारणतः एव लोकः जीवति।

भूलोकस्य उद्धारः अपि भवता एव खलु करणीयः? अल्पशक्तिकानां मानवानां किं वा सामर्थ्यम्? भूलोके राक्षसानां निग्रहणं यदि भवेत् तर्हि तत् भवत्तः एव। अतः भवान् यदुवंशे जन्म प्राप्नोतु'' इति

नारदस्य वचनं श्रुत्वा विष्णुः ब्रह्माणं पश्यन् उक्तवान् - ''अहं तु मानवजन्म प्राप्तुं सिद्धः अस्मि। केन कुत्र अवतरणीयम् इति भवान् एव आदिशतु'' इति।

तदा ब्रह्मा उक्तवान् - ''वरुणस्य यज्ञधेनुं कश्यपः वशीकृतवान् अस्ति। कश्यपस्य पत्न्यौ अदितिः सुरभिः च यज्ञधेनोः प्रत्यर्पणे विघ्नम् आचरतः। वरुणः एतां स्थितिं निवेद्य मां शरणं गतवान्। अतः अहं कश्यपं तत्पत्न्यौ च ''मानवजन्म प्राप्नुवन्तु'' इति शप्तवान्। कश्यपः इदानीं वसुदेवनाम्ना जन्म प्राप्य कंसस्य पशुशालायाः अध्यक्षत्वं निर्वहति। कश्यपस्य पत्न्यौ देवकीनाम्ना रोहिणीनाम्ना च जन्म प्राप्य वसुदेवस्य पत्न्यौ जातौ। भवान् स्वकीयम् अंशं द्विधा विभज्य वसुदेवस्य पत्न्योः गर्भं प्रविशतु'' इति।

ब्रह्मणः प्रस्तावम् अङ्गीकृत्य महाविष्णुः तां सभां विसृष्टवान्। सर्वान् सम्प्रेष्य गरुडवाहनम् आरुह्य क्षीरसागरम् उद्दिश्य ततः वेगेन प्रस्थितवान् च।






# भाटकव्यवहारः

सुरपुरनामके ग्रामे सोमनाथः देवनाथः इति द्वौ स्नेहितौ आस्ताम्। तौ कर्मकरवृत्त्या जीवनं यापयतः। यः यत्कार्यार्थम् अह्वयति तत्कार्यार्थम् एतौ गच्छतः। अतः निर्दिष्टं कार्यं किमपि न आसीत् तयोः।

सोमनाथः अतीव सज्जनः मन्दमतिः च। देवनाथः तु महाचतुरः युक्तिमान् च। दरिद्रताकारणतः सः कदाचित् जनान् वञ्चयति। देवनाथस्य चातुर्यं तावत् आसीत् यत् तस्य वञ्चकत्वं जानन्तः अपि जनाः पुनः तेन वञ्चिताः भवन्ति स्म।

एकदा सोमनाथः आत्मना वर्धितान् शाकादीन् नगरं नेतुं निश्चित्य दीननाथस्य समीपं गतवान्। दीननाथं प्रार्थितवान् च -"भोः, श्वः नगरं प्रति वस्तूनि नेतव्यानि सन्ति। भवान् एतदर्थं भवतः गर्दभं दातुं शक्नोति वा?" इति।

"मम गर्दभः हयः एव गृहात् निर्गतः इतोऽपि न प्रत्यागतः। अस्माकं ग्रामस्य सीमाप्रदेशे रामनाथः नाम कश्चित् अस्ति। तस्य समीपे अश्वः अस्ति। सः महाकृपणः। तथापि भवता पृष्टः चेत् अश्वं दद्यात्, पृच्छतु" इति उक्तवान्।

रामनाथः साक्षात् सोमनाथस्य समीपं गतवान्। "एकस्य दिनस्य निमित्तं भवदीयम् अश्वं मह्यं दातुं शक्नोति वा"? इति पृष्टवान् च।

तदा रामनाथः पृष्टवान् -"एकस्य दिनस्य भाटकार्थं भवान् कियत् ददाति?" इति।

"मम हस्ते एका वराटिका अपि नास्ति। निश्शुल्कं दद्यात् इति अहं चिन्तितवान्" इति उक्तवान् सोमनाथः।

"निश्शुल्कं कथं दातुं शक्येत? एकस्य दिनस्य भाटकरूपेण पञ्चदश कूष्माण्डानि दातव्यानि" इति उक्तवान् रामनाथः।




"मम समीपे तु पञ्च कूष्माण्डानि सन्ति। शिष्टनि दश कूष्माण्डानि सप्ताहानन्तरं दास्यामि। अस्तु वा?" इति पृष्टवान् सोमनाथः।

"अस्तु तर्हि। इदानीं पञ्च कूष्माण्डानि दत्त्वा गच्छतु। यदा अवशिष्टानि कूष्माण्डानि आनयति तदा अश्वं नेतुम् अर्हति" इति उक्तवान् रामनाथः।

मन्दमतिः सोमनाथः गृहं गत्वा पञ्च कूष्माण्डफलानि आनीय रामनाथाय दत्तवान्।

अनन्तरदिने दीननाथः सोमनाथस्य गृहं प्रति गर्दभेन सह आगत्य -" ह्यः भवान् गर्दभं पृष्टवान् किल? एषः गर्दभः रात्रौ प्रत्यागतः। एतस्य साहाय्येन भवान् वस्तूनि नगरं नेतुम् अर्हति" इति सूचितवान्।

"अहं तु तं रामनाथम् 'अश्वं ददातु इति पृष्टवान् किल?" इति उक्तवान् सोमनाथः।

"मम गर्दभः लब्धः खलु? इतः परं कृपणस्य रामनाथस्य अश्वस्य आवश्यकता का?" इति पृष्टवान् दीननाथः।

"अश्वनिमित्तं भाटकरूपेण पञ्चदश कूष्माण्डफलानि दातुम् अहम् अङ्गीकृतवान् अपि। पञ्च कूष्माण्डानि एतावता दत्तानि। इदनीम् अहम् 'अश्वः मास्तु' इति यदि वदामि तर्हि सः कूष्माण्डानि न प्रत्यर्पयेत्" इति आतङ्कं प्रकटितवान् सोमनाथः।

"कीदृशम् आकार्यं कृतं भवता?" इति तर्जनस्वरेण उक्तवान् दीननाथः।

तस्मिन् एव समये युक्तिमान् देवनाथः तेन मार्गेण आगतवान्। एतौ प्रवृत्तं सर्वं निवेदितवन्तौ।

"अश्वस्य आवश्यकता नास्ति इति उक्त्वा कूष्माण्डानि प्रत्यानयतु। अश्वस्य उपयोगः एव न स्वीकृतः। अतः तेन कूष्माण्डानि प्रत्यर्पणीयानि एव" इति सोमनाथम् उक्तवान् देवनाथः।

"तथा प्रष्टुं मम तु धैर्यं नास्ति" इति उक्तवान् सोमनाथः।

"एवं तर्हि भवता सह अहम् अपि आगच्छामि। सः कुतः वा न प्रत्यर्पयेत् इति पश्याम तावत्" इति वदन् देवनाथः सोमनाथेन सह रामनाथस्य गृहं प्रति प्रस्थितवान्। दीननाथः अपि तौ



अनुसृतवान्।

एतान् दृष्ट्वा रामनाथः पृष्टवान्– "आगमनस्य कः विशेषः?" इति।

"अश्वार्थं वयम् आगताः। अश्वः कुत्र?" इति पृष्टवान् देवनाथः।

"तत्र अस्ति, पश्यन्तु। इतोऽपि दश कूष्माण्डानि दत्त्वा अश्वं नेतुम् अर्हन्ति भवन्तः" इति उक्तवान् रामनाथः।

"अश्वस्य नयनं दूरे तिष्ठतु। एषः अश्वः प्रयाणार्थं प्रर्याप्तः भवेत् वा न वा इति द्रष्टव्यम्" इति उक्तवान् देवनाथः।

"अश्वस्य परीक्षा नाम किम् एतत्? सर्वे अश्वाः समानाः किल? अन्यः अश्वः दृष्टः भवद्भिः? तद्वत् एव भवति एषः अपि" इति उक्तवान् रामनाथः।

"अस्माकं प्रयाणस्य विषये भवान् किं जानाति?" इति वदन् देवनाथः वितस्ति–प्रमाणेन अश्वस्य दैर्घ्यं परिशीलयन् सोमनाथम् उक्तवान् -"भोः पश्यतु, वितस्ति द्वयपरिमाणके स्थले भवान् उपविशति। भवतः पृष्ठतः अहं सार्धैकवितस्तिपरिमाणके स्थले उपविशेयम्। मम पृष्ठतः मम पत्नी उपविशति। अतः भवतः पत्नी भवतः पुरतः वितस्तिद्वयपरिमाणके स्थले उपविशतु। भवतः पुत्री तु अल्पवयस्का, सा अश्वस्य कण्ठस्य उपरि उपविशतु। शिशुः मातुः अङ्के उपवेष्टुम् अर्हति। इतः परं वस्तूनां स्थापनं कुत्र इति अस्माभिः चिन्तनीयम्" इति वदन् एव आसीत् देवनाथः।

तदा तस्य वचनं स्थगयन् रामनाथः कोपेन पृष्टवान्-"भोः, भवतः बुद्धिः स्तिमिता अस्ति वा? अश्वस्य उपरि कियन्तः उपवेष्टुम् अर्हन्ति इति भवान् चिन्तयति?" इति।

"यावान् अवकाशः तावति वयम् उपविशामः। उपविष्टनां भारं वोढुं शक्नोमि वा इति तु अश्वेन चिन्तनीयम्। कथञ्चित् अस्माभिः नगरसमीपस्थं तीर्थक्षेत्रं प्रति गन्तव्यम्" इति उक्तवान् देवनाथः।

"एवं तर्हि अल्पव्ययेन तीर्थयात्रा–करणार्थम् एषः उद्यमः वा भवताम्?" इति कोपेन पृष्टवान् रामनाथः।

"आम्, तेन यद्यपि प्रयाणं कष्टकरं भवेत्, तथापि कथञ्चित् निर्वोढव्यं खलु?" इति शान्तस्वरेण एव उक्तवान् देवनाथः।

"अहं मम अश्वम् आपदि पातयितुं न इच्छामि। अतः अश्वं भाटकार्थं न ददामि" इति उक्तवान् रामनाथः।

"दत्तस्य वचनस्य भङ्गः महात्मनां लक्षणं न। दत्तं वचनं परिपालनीयम् एव" इति उक्त्वा देवनाथः सोमनाथम् उद्दिश्य वक्तुम् आरब्धवान्-" भोः , भवतः माता विस्मृता किल? तस्याः उपवेशनव्यवस्था का? कुक्कुटाः कथं नेतव्याः? अश्वस्य पार्श्वद्वये कण्डोलं बद्ध्वा तत्र स्थापयितुं शक्नुयाम" इति।

तदा रामनाथः उन्मत्तः इव आक्रोशं कुर्वन् -"मम अश्वं मारयिष्यन्ति भवन्तः। भवद्भ्यः अश्वं भाटकार्थं सर्वथा न ददामि" इति उक्तवान्।

"यदि दत्तं वचनं न परिपालयति तर्हि भवन्तं न्यायास्थानं नयामि। जागरूकः भवतु" इति सगम्भीरम् उक्तवान् देवनाथः।

"सोमनाथेन दत्तानि पञ्च कुष्माण्डानि प्रत्यर्पयामि। तदा भवतां मम च कोऽपि सम्बन्धः न अवशिश्यते" इति उक्तवान् रामनाथः।

"पञ्चदशकूष्माण्डात्मकं खलु भाटकं निश्चितम् आसीत्? पञ्च कूष्माण्डानि प्रत्यर्पयामि इत्यस्य कः अर्थः?" इति कोपेन पृष्टवान् देवनाथः।

"किन्तु दत्तानि तु कूष्माण्डानि पञ्च एव" इति उक्तवान् रामनाथः।

"भाटकार्थं दीयमानः अश्वः उपयुक्तः चेत् अस्माभिः पञ्चदश कूष्माण्डानि दातव्यानि अभविष्यन् खलु? एवं तर्हि अश्वदानं निराकृतं चेदपि तावन्ति एव कूष्माण्डानि भवता दातव्यानि। एकं न्यूनं चेदपि वयं स्वीकर्तुं न सिद्धाः" इति दृढस्वरेण उक्तवान् देवनाथः।

रामनाथः कोपेन एव अन्तः गत्वा पञ्चदश कूष्माण्डानि आनीय दत्त्वा उक्तवान् -" हुं, स्वीकृत्य गच्छन्तु इतः। भवतां मम च सम्बन्धः समाप्तः" इति।

रामनाथेन दत्तानि कूष्माण्डानि स्वीकृत्य ते त्रयः ततः प्रस्थितवन्तः। त्रयाणाम् अपि परमसन्तोषः जातः आसीत्।





# प्रत्युपकारः

## १

सुधाकरः प्रियंवदा च सुरङ्गमार्गं प्रविश्य शिलापटलेन द्वारं पिहितवन्तौ। किञ्चित्–कालानन्तरं ग्रामीणाः तत्र आगत्य दृष्टवन्तः। सुधाकरः प्रियंवदा वा तैः तत्र न दृष्टौ। समीपस्थेषु गुल्मेषु गर्तेषु च तौ अन्विष्टवन्तः। अन्ते -" सुधाकरः वस्तुतः अपि देवांश– सम्भूतः महापुरुषः एव। अत्र न कोऽपि सन्देहः" इति ते सर्वे ऐकमत्येन निर्णीतवन्तः।

एतया विचित्रघटनया दिग्भ्रान्तौ जय–विजयौ किङ्कर्तव्यतामूढतया स्थितवन्तौ। अत्रान्तरे ग्रामीणाः तौ बद्धवन्तः। इतः परं दश वर्षाणि यावत् शतानन्दवनग्रामस्य परिसरे भवद्भ्यां पादौ न स्थापनीयौ। एषः नियमः उल्लङ्घितः चेत् भवतोः प्राणाः निर्गच्छेयुः इति उक्त्वा जयविजयौ ग्रामात् निष्कासितवन्तः।

सुरङ्गमार्गं प्रविष्टवत्याः प्रियंवदायाः एतस्मिन् सन्दर्भे प्रयाणं कष्टकरं न जातम्। तया सह सुधाकरः अस्ति। बुभुक्षानिवारणार्थं पाथेयम् अपि अस्ति।

"राजभवप्राप्तेः अनन्तरम् आवाभ्यां किं करणीयम्?" इति प्रियंवदां पृष्टवान् सुधाकरः।

"मां कोऽपि मान्त्रिकः नीतवान् अस्ति इति किंवदन्ती एतावता एव राजधान्यां प्रसृता अस्ति । भवान् मां मान्त्रिकबन्धनतः विमोचितवान् इति अहं मम पितरं वदामि। भवान् तस्मै रोचते इति तु निश्चितम्। अनन्तरम् आवयोः विवाहः निर्विघ्नं प्रचलिष्यति" इति उक्तवती प्रियंवदा।

"एतत् तु अन्याय्यम्। एवं क्रमेण



श्रुत्वा अतीव खिन्ना प्रियंवदा पृष्टवती "मां परिणेतुं भवतः इच्छा नास्ति वा?" इति।

"इच्छा कुतः वा न स्यात्? 'मम जातकं परिशील्य ज्योतिषिकः उक्तवान् यत् अहं सामान्यं कञ्चित् परिणेष्यामि इति' इति पूर्वं भवती माम् उक्तवती। तदा एव भवत्या परिणेष्यमाणः सामान्यः अहम् एव भवेयम् इति भावना मम मनसि आगता। एषा स्वार्थभावना मम मनसि आगता इति कारणतः मदीयाः अपूर्वशक्तयः लुप्ताः जाताः। 'अपकारकारिणः अपि उपकारः करणीयः, कदापि स्वार्थचिन्तनं न करणीयम्' इति हिमालये तपसि लीनः मम गुरुः आदिष्टवान् आसीत् । गुरोः आज्ञां समुल्लङ्घ्य यत् व्यवहृतवान् तत्र कारणं भवद्विषयिणी प्रीतिः एव। तथापि मत्कारणतः जयस्य विषये अन्याय्यम् आचरितं न भवेत्" इति उक्तवान् सुधाकरः।

प्रियंवदा उत्तरं किमपि वक्तुं न शक्तवती। 'राजभवनं प्राप्य रक्षकभटं जयं दृष्ट्वा सर्वं निवेदनीयम्। सः आवयोः परिणयार्थम् अङ्गीकारं यथा दद्यात् तथा प्रयत्नः करणीयः। एवं न करोमि चेत् सुधाकरः कथम् अपि मां परिणेतुं सिद्धः न भवेत्" इति आलोचितवती प्रियंवदा ।

मध्यरात्रसमये सुरङ्गामार्गक्रमणं समाप्तम्। प्रियंवदा शयनागारं प्रविष्टवती। "यदा अहम् आह्वयामि तदा भवान् सुरङ्गात् बहिः

'भवन्तम् एव परिणेष्यामि' इति इतः पूर्वं भवती रक्षकभटाय जयाय वचनं दत्तवती आसीत् खलु? तत् विस्मृतवती वा?" इति पृष्टवान् सुधाकरः।

"भवतः दर्शनतः पूर्वम् तथा उक्तवती अहं इति तु सत्यम् एव। किन्तु स एव परिणेतव्यः इति मम मनसि तीव्रा भावना न आसीत्। प्रत्युपकाररूपेण किमपि साहाय्यं करणीयम् इति एतावत् एव आसीत्" इति उक्तवती प्रियंवदा।

क्षणकालम् आलोच्य सुधाकरः उक्तवान् -" यथाकथम् अपि भवतु। रक्षकभटस्य जयस्य परिणयः एव उचितः इति भाति मम मनसि" इति। एतत् वचनं

आगच्छतु" इति सुधाकरं सूचितवती सा।

शयनागारं प्रविश्य प्रियंवदया घण्टां वादिता। घण्टानादं श्रुत्वा सर्वदिक्तः अपि परिचारकाः धावन्तः तत्र आगतवन्तः। राजकुमारी शयनागारं प्रत्यागतवती इति वार्ता क्षणमात्रेण सर्वत्र प्रसृता। अन्तःपुरे सन्तोषस्य तरङ्गः समत्पन्नः। राजा कीर्तिसेनः, राज्ञी कान्तिमती च धावन्तौ तत्र आगतवन्तौ।

कान्तिमती पुत्रीं प्रियंवदां दृढम् आलिङ्ग्य -"आगता खलु मम पुत्री! एतावत्पर्यन्तं कुत्र आसीत् भवती? कुशलिनी खलु? इदानीं कथं प्रत्यागतवती?" इति प्रश्नपरम्पराम् एव आरब्धवती।

"अम्ब! सा च महती कथा। अहं कुशलिनी अस्मि। मम किमपि न जातम्। सर्वप्रथमम् अन्तःपुररक्षकभटाः सर्वे अत्र आह्वातव्याः" इति उक्तवती प्रियंवदा।

अन्तःपुरस्य रक्षकभटाः विंशत्यधिकाः आसन्। ते अन्तःपुरपरिसरे राजोद्याने च रक्षणकार्यं कुर्वन्तः राजकुमारीं जागरूकतया रक्षन्तः आसन्।

तान् सर्वान् दृष्ट्वा निराशया प्रियंवदा पृष्टवती –"रक्षकभटेषु जयः नाम कश्चित् आसीत् खलु? सः कुत्र?" इति।

तदा रक्षकभटप्रमुखः उक्तवान् - "युवराज्ञि! सः जयः स्वबान्धवकन्यां सद्यः एव परिणेष्यति। विवाहस्य वाग्दान–कार्यक्रमार्थं सः विरामं स्वीकृत्य स्वग्रामं गतवान् अस्ति। श्वः सः प्रत्यागमिष्यति च"



इति। एतत् श्रुतवत्याः प्रियंवदायाः महान् सन्तोषः।

सा उच्चैः जृम्भणं कुर्वती-"निद्रा मां तीव्रं बाधते। विश्रान्तिः आवश्यकी मम" इति उक्तवती।

तदा सर्वे रक्षकभटाः ततः निर्गतवन्तः। प्रियंवदा सुरङ्गे स्थितं सुधाकरम् आहूय प्रवृत्तं सर्वं निवेद्य –"इदानीम् आवयोः परिणयः भवितुम् अर्हति। यतः मार्गः निरातङ्कः जातः। विवाहः अनुमतः खलु भवतः?" इति पृष्टवती।

"जयस्य विवाहप्रयत्नः आरब्धः इति तु सत्यम् एव। किन्तु एतं विवाहप्रयत्नं सः स्वयम् अङ्गीकृतवान्, उत बलात् विवाहः



प्रचलति? इति तु स्पष्टं न ज्ञातम्। सः आवयोः विवाहं मनसा अङ्गीकुर्यात्'' इति उक्तवान् सुधाकरः ।

प्रियंवदा सुधाकरं पुनः सुरङ्गमार्गस्य अन्तः प्रेषितवती। अनन्तरं शय्यायां सुप्ता गाढनिद्रया तां रात्रिं यापितवती च।

अनन्तरदिने प्रातःकाले उद्यानकार्यार्थम् आगतं जयं दृष्ट्वा प्रियंवदा पृष्टवती -''किं भोः, कुशलं वा? मया काचित् शुभवार्ता श्रुता। भवतः विवाहः निश्चितः इति श्रुतवती। सत्यं वा? कदा भविष्यति?'' इति।

''विवाहः निश्चितः इति तु सत्यम् एव। मुहूर्तः इतोऽपि न निश्चितः। मां क्षाम्यतु राजकुमारि! तद्दिने किमपि अनालोच्य भवत्याः वचनम् अङ्गीकृतवान्। किन्तु राजकुमार्याः सेवकस्य च विवाहः शुभोदयाय न भवति इति मम विचारः। अतः मम बन्धुकुले जातां कन्यां परिणेतुम् अङ्गीकृतवान्। मया अनौचित्यं किमपि न आचरितम् इति अहं भावयामि'' इति उक्तवान् जयः।

''शुभं भवतु'' इति आशास्य प्रियंवदा प्रकोष्ठं प्रत्यागत्य सुरङ्गे स्थितं सुधाकरं दृष्ट्वा जयस्य विवाहनिश्चयं श्रावयित्वा उक्तवती -''इदानीम् आवयोः विवाहे कोऽपि आक्षेपः न अवशिष्टः इति भाति'' इति।

सुधाकरः विवाहम् अङ्गीकृतवान् । प्रियंवदा सुधाकरं मातापित्रोः समीपं नीत्वा परिचायितवती। 'सुरङ्गमार्गस्य परीक्षायां कुतूहलिनी अहम् इतः निर्गतवती' इति कल्पितवाक्यम् उक्त्वा अनन्तरं प्रवृत्तं यथावत् निवेदितवती।

एतत्सर्वं श्रुत्वा कीर्तिसेनराजः अतीव सन्तुष्टः। सुधाकरस्य प्रशंसां कुर्वन् सः उक्तवान्-''मम पुत्र्याः निमित्तं भवान् अपूर्वं त्यागं कृतवान्। शक्तीनां ह्रासम् अपि न परिगणितवान् भवान्। भवता यत् साहाय्यं कृतं तदर्थम् अर्धं राज्यं दत्तं चेदपि अपर्याप्तम् एव'' इति।

तदा सुधाकरः मन्दहासपूर्वकम् उक्तवान् ''महाप्रभो! अपकारिणः अपि उपकारः मया यत् कृतः तस्य फलरूपेण अहम् इदानीं राजकुमारी-परिणयभाग्यं प्राप्तवान् । तद्द्वारा

राजपदवीप्राप्तिः अपि भविष्यति। प्रजानां योगक्षेमम् एव लक्ष्यत्वेन स्वीकृत्य राज्य-शासनं कर्तुम् इच्छामि। प्रजानां निमित्तं यस्य कस्यापि त्यागार्थम् अहं सिद्धः। एतदर्थम् अनुमतिदानेन अहम् अनुग्रहणीयः इति प्रार्थयामि'' इति।

कीर्तिसेनः क्षणकालम् आलोच्य पृष्टवान् -''यः राजा भवेत् सः प्रजाहितं मनसि कृत्य एव राज्यपालनं कुर्यात्। भवान् त्रिकरण-शुद्धया तत्कार्यं कर्तुम् इच्छति चेत् तत्र मम अनुमतेः प्रसक्तिः का? किं मयि संशयः वा भवतः?'' इति।

''महाराज! स्पष्टवचनार्थम् अहं क्षन्तव्यः। भवतः शासनसमये इदानीं शतानन्दवन-ग्रामोऽपि अस्ति। तत्रत्यानां मूर्खतां भवान् जानाति एव। यस्य शासने प्रजाः परममूर्खाः भवन्ति तादृशेन कर्तव्यलोपः आचरितः इत्येव खलु वक्तव्यम्? अतः एव अनुमतिं पृष्टवान् अहम्'' इति उक्तवान् सुधाकरः।

''वत्स! भवता सत्यम् एव उक्तम्। मम देशस्य स्पष्टं चित्रं मम मनसि नास्ति। तत्तु शतानन्दवनग्रामस्य अस्तित्वेन एव प्रमाणितम् अभवत्। शतानन्दवनसदृशाः ग्रामाः इतोऽपि सन्ति वा इति परिशील्य तेषाम् उद्धारार्थं भवान् प्रयत्नं करोतु। मया अकृतं भवान् कुर्वन् अस्ति इति तु सन्तोषस्य विचारः'' इति उक्तवान् कीर्तिसेनः।

प्रजाहितार्थम् अहोरात्रं चिन्तयतः सुधाकरस्य विषये प्रियंवदायाः गौरवम् इतोऽपि प्रवृद्धम्। राजपदवीप्राप्त्यै उद्युक्तस्य सुधाकरस्य मनसि स्वार्थस्य लेशः अपि न आसीत्। अतः प्रियंवदा सुधाकरस्य पादयोः प्रणम्य उक्तवती -''भवतः त्यागः निःस्वार्थता वा असदृशः एव। प्रजानाम् उन्नतिं साधयन् भवान् सत्परम्परायाः प्रवर्तकः भविष्यति'' इति।

अनन्तरं शुभे मुहूर्ते प्रियंवदा-सुधाकरयोः विवाहः सवैभवं सम्पन्नः। सुधाकरः उपकारसेनः इति नाम्ना राज्यपालनं कुर्वन् प्रजाहितार्थं बहूनि कार्याणि कुर्वन् 'आदर्शप्रभुः' इति कीर्तिं सम्पादितवान्।





# कायकल्पचिकित्सा

विलासपुरनामकं नगरं पूर्वं श्वेत–नन्दनः नाम राजा पालयन् आसीत्। एकदा सः दर्पणे स्वमुखं पश्यन् आसीत्। तदा सः स्वमुखे चर्मशैथिल्यजातां एकां रेखां दृष्टवान्।

'अहो! अहम् एतावता एव वार्धक्येन आक्रान्तः अभवम्। इतः परं के के विकाराः मयि भवेयुः इति न जानामि' इति आलोचयन् बहुधा खिन्नः सः।

तद्दिने एव सः वैद्यम् आहूय मुखं प्रदर्श्य 'एतं विकारं निवारयितुं शक्यते वा?' इति पृष्टवान्।

'निश्चयेन शक्यते' इति वदन् वैद्यः विविधानि औषधानि यच्छन् अपारं धनव्ययं कारितवान् । राजा श्वेतनन्दनः तानि औषधानि श्रद्धया सेवितवान्। किन्तु मुखे स्थिताः रेखाः सङ्ख्यया प्रवृद्धाः, न तु न्यूनतां गताः।

महाराजस्य एतां दशां दृष्ट्वा मन्त्री मुकुन्दवर्मा उक्तवान् -" महाप्रभो! इतोऽपि भवान् पञ्चाशद्वर्षीयः अपि न जातः। एतावता एव भवतः का एषा चिन्ता? एतादृशस्य निवारणे समर्थं सुवर्णनगरीयं मलयजनामकं वैद्यश्रेष्ठम् अहं जानामि। सः कायकल्पचिकित्सायां सिद्धहस्तः । तस्य औषधोपचारेण भवान् निश्चयेन नवयौवनं प्राप्नुयात्" इति।

तदा श्वेतनन्दनः असन्तोषेण उक्तवान् -"सुवर्णनगरस्य शासकः अस्माकं शत्रुः। अहं मलयजस्य औषधं स्वीकरोमि इति यदि सः जानीयात् तर्हि निश्चयेन कथमपि उपरोधं कुर्यात्" इति।

"अस्मदीयं गमनं यथा कोऽपि न जानीयात् तथा वयं तत्र गच्छेम। धनिक–वणिग्वेषेण वयं सुवर्णनगरं गच्छेम। मलयजं दृष्ट्वा औषधं स्वीकृत्य आगच्छेम" इति सूचितवान् मुकुन्दवर्मा।



श्वेतनन्दनः एतत् अङ्गीकृतवान् । एतदनुगुणं तौ वेषान्तरं धृत्वा सुवर्णनगरं प्रति प्रस्थितवन्तौ। मार्गे ताभ्यां कश्चन वृद्धः दृष्टः। सः वृक्षस्य अधः उपविश्य किमपि मन्दस्वरेण गायन् आत्मसन्तोषे लीनः आसीत्।

तस्य वृद्धस्य अङ्गानि सर्वाणि शिथिलानि आसन्। तथापि सः सन्तोषेण गायन् अस्ति। एतत् दृश्यं दृष्टवतः महाराजस्य तु महत् आश्चर्यम्!

राजा मन्त्रिणम् उक्तवान् -"पश्यत् एतं वृद्धम्! सन्तोषेण स्थितम् एतं दृष्टवतः मम मनसि असूया उत्पद्यते। एतस्य सन्तोषस्य किं कारणम् इति तम् एव पृच्छाम चेत् वरं खलु" इति।

उभौ अपि तस्य वृद्धस्य समीपं गतवन्तौ। राजा वृद्धं पृष्टवान् -"भवान् तु महावृद्धः। अङ्गानि शिथिलानि। तथापि तरुणः इव सन्तोषेण रागे लीनः अस्ति किल? एतस्य सन्तोषस्य किं कारणम्?"इति।

तदा सः वृद्धः तीक्ष्णदृष्ट्या पश्यन् महाराजम् उक्तवान् -"अहं महावृद्धः वा? केन आधारेण एवं वदति?" इति।

तदा श्वेतनन्दनः हसन् -"कः अन्यः आधारः अपेक्षितः? शिथिलानि भवदीयानि अङ्गानि एव भवतः वृद्धत्वं प्रमाणयन्ति खलु? प्रत्यक्षदृष्टस्य प्रमाणान्तरं किमर्थम्?' इति पृष्टवान्।

"मम अङ्गानि शिथिलानि? तथा भासन्ते वा? वस्तुतः तु चत्वारिंशद्वर्षेभ्यः पूर्वं यदा अहं षष्टिवर्षीयः आसं तदा मया दर्पणे मुखं दृष्टं स्मरामि। अनन्तरं कदापि दर्पणे आत्मानं न दृष्टवान्। अस्तु तावत्, यथा भवान् वदति तथा मम अङ्गानि शिथिलानि चेत् का हानिः? कुतः सन्तोषेण न स्थातव्यम्?" इति पृष्टवान् सः वृद्धः।

तदा राजा आश्चर्यं प्रकटयन् वृद्धम् उक्तवान् -"एवं तर्हि इदानीं भवान् शतवर्षीयः!" इति।

वृद्धः 'आम्' इति वदन् शिरः चालितवान्।

तदा राजा रहस्यम् उद्घाटयन् आत्मनः मन्त्रिणः च परिचयम् उक्त्वा आगमन-कारणम् अपि निवेदितवान्।

सः वृद्धः हसन् -"प्रभो! कायकल्प-

चिकित्सार्थं भवता तावद्दूरं गन्तव्यं नास्ति। तं चिकित्साक्रमम् अहम् अपि जानामि'' इति उक्त्वा महाराजं स्वसमीपम् आहूय तस्य कर्णे किमपि उक्तवान्।

महाराजः श्वेतनन्दनः मन्दहासं प्रकटयन् कोषतः सुवर्णनाणकानि निष्कास्य वृद्धाय दातुम् उद्युक्तः।

वृद्धः सुवर्णनाणकानां स्वीकारं निराकुर्वन् उक्तवान् -''प्रभो! महात्मनः भवतः दर्शनेन एव अहं तृप्तः अस्मि। एतैः नाणकैः मम किं प्रयोजनम्? नित्यतृप्तस्य मम काऽपि अपेक्षा नास्ति'' इति।

राजा अग्रे गमनविचारं परित्यज्य स्वनगरं प्रत्यागतवान्। मन्त्री अपि मौनम् तम् अनुसृतवान्।

चिकित्सां विना एव महाराजस्य चिन्ता अपगता। इदानीं महाराजः सन्तोषेण उत्साहेन च राजकार्यं निर्वहति।

एतत् परिवर्तनं दृष्ट्वा मन्त्री मुकुन्दवर्मा एकदा महाराजम् उक्तवान् -''प्रभो! तद्दिने भवान् वृद्धस्य सकाशात् किमर्थं प्रत्यागतवान् इति मया न ज्ञातम्। वृद्धस्य दर्शनानन्तरं भवतः व्यवहारे महत् परिवर्तनं दृश्यते। एवं तर्हि सः वृद्धः कायकल्पचिकित्साक्रमं किं बोधितवान्?, भवान् एव वदेत् इति भावयन् एतावत्पर्यन्तम् अहं मौनम् आसम्'' इति।

''वयःकारणतः शरीरे आगतं परिवर्तनम् एव सदा चिन्तयित्वा दुःखम् अनुभवामः चेत् तदेव वार्धक्यम्। तत् अविगणय्य सन्तोषेण उत्साहेन च सदा तिष्ठामः चेत् तेन आयुः वर्धते। मनः एव सर्वस्य कारणम्। एतत् ज्ञातं चेत् कायकल्प– चिकित्सायाः आवश्यकता न भवति। एतत् न ज्ञातं चेत् कायकल्पचिकित्सया अपि किमपि न सिध्यति इति सः वृद्धः सूचितवान्। सत्यं खलु तस्य वचनम्? सर्वम् अपि मनः आधारीकृत्य अस्ति। वार्धक्यं यौवनं चापि मनः आधारी– कृत्य एव, न तु शरीरम् आधारीकृत्य'' इति उक्तवान् महाराजः।

''तेन त्रैकालिकं सत्यम् एव उक्तम्'' इति हसन् उक्तवान् मन्त्री मुकुन्दवर्मा।




हौलर्कपयः
दक्षिण-मेरिकादेशीयाः हौलर्जातीयाः कपयः
स्वसमानपरिमाणयुतानां प्राणिनाम् अपेक्षया अपि
उच्चैः आक्रोशनं कर्तुं शक्नुवन्ति। तेषां जिह्वासु स्थितं रिक्तसारं कृशम् अस्थि एवम् आक्रोशने
उपकरोति इति श्रूयते।


तरणम् अजानन् प्राणिकुलम्।
महतः अपायस्य परिस्थितौ अपि
चित्रोष्ट्रः कदाचित् अपि तरणं
न करोति एव।


महामकराः तदा तदा शिलाः भक्षयन्ति। ते सामान्यतः ४.७७ कि. ग्रां. भारयुताः शिलाः भक्षयितुं
शक्नुवन्ति। जलप्रवाहेण नेतुं यथा न शक्येत तथा भूतलं दृढं गृहीत्वा स्थातुम् एताः भक्षिताः शिलाः
अतीव साहाय्यिकाः भवन्ति।
मकराः शिलाभक्षकाः

# पुत्रस्य किं, ज्वरः वा?

| | | |
|---|---|---|
| राधा- | किं भोः लक्ष्मि! आगमने एतावान् विलम्बः? ह्यः अपि न आगतवती। न आगम्यते चेत् पूर्वम् एव सूचनीयं वा न वा? | Hallo, Lakshmi! Why are you so late? You didn't come yesterday either! If you are not coming, you should inform before hand, shouldn't you? |
| लक्ष्मीः- | किं करोमि अम्ब! परह्यः आरभ्य मम बालः तीव्रम् अस्वस्थः। कस्य द्वारा वार्ता प्रेषयामि? अहम् एकाकिनी खलु? | What could I do,mother? Since the day before, my son was sick. Through whom could have I sent the message? I was alone. |
| रा- | पुत्रस्य किं, ज्वरः वा? | What happened to your son? Is he suffering from fever? |
| ल- | आम् अम्ब! वैद्यः वदति—विषम—शीतज्वरः इति। | Yes mother, the doctor says it is typhoid. |
| रा- | तर्हि जागरूकतया औषधोपचारः करणीयः। इदानीं बालस्य पार्श्वे कः अस्ति? | Then he must be carefully treated. Who is there now by his side? |
| ल- | पार्श्वगृहस्य बालिकाम् उपवेष्टुम् उक्त्वा आगतवती। | I have requested the girl in the neighbourhood to keep an eye on him. |
| रा- | बालिका किं वा जानीयात् भोः? भवत्या तत्र स्थातव्यम् आसीत्। | What could a girl do? You should have been there. |
| ल- | अहं गृहे तिष्ठामि चेत् उपरपूरणस्य का वा गतिः? | If I stay at home, how about our living? |
| रा- | उदरस्य निमित्तं पुत्रस्य विषये उदासीनता वा? छे, भवती इदानीम् एव गच्छतु। | For that sake, you are careless about your son? You may go now. |
| ल- | अत्रत्यानि कार्याणि? | What about the work here? |
| रा- | द्वित्राणि दिनानि अहम् एव कथञ्चित् निर्वहामि। | I will manage somehow for two or three days. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां जनवरी -८८ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर् -२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः मसपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः-

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'सप्टम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् – **आनीयते मया पेयम् ।**

द्वितीयचित्रम्– **पेयमन्विष्यते मरौ ।।**

प्रेषकः– श्री चन्द्रप्रभसागरः, श्री जितयशःश्री फौण्डेशन् 9c एस्प्लेनेड् रोड् ईस्ट्, कलकत्ता – ६९


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास-६०००२६.

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेशन्स्**, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६.

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्कः- | Lap | धूमायते- | Smoky |
| अनक्षरज्ञः- | Illiterate | ध्वनिकाव्यम्- | A verse of high beauty |
| अभ्यर्थी- | Candidate | ननान्दा- | Husband's sister |
| अयः- | Iron | नलिका- | Tap |
| आपणः- | Shop | पिहितः- | Closed |
| आसन्दः- | Chair | पूर्णायुः- | Full-life |
| उडुपः- | Raft | फणा- | Hood |
| उद्गतः- | Swollen (Sea) | भाटकम्- | Rent |
| कनिष्ठिका- | Little finger | मकरः- | Crocodile |
| कपाटिका- | Cupboard | युतकम्- | Shirt |
| किंवदन्ती- | Rumour | रूक्षः- | Rough |
| कुल्या- | Canal | लगति- | Sticks |
| कूष्माण्डम्- | Pumpkin | वितस्तिः- | A measure of length |
| क्रकचः- | Hack-saw | विनिमयः- | Exchange |
| गर्दभः- | Donkey | सहृदयः- | One with a poet's insight |
| चाटुश्लोकः- | Riddle | स्वरूपयोग्यता- | Eligibility |
| चित्रोष्ट्रः- | Giraffe | स्वेदः- | Sweat |
| चिबुकम्- | Chin | हन्ता- | Murderer |
| चुल्ली- | Stove | * * | * * |
| जटिलः- | Difficult | | |
| तायकम्- | Amulet | | |
| दूरदर्शकम्- | Telescope | | |

